Some other regulations regarding Piṇḍapāta are enumerated in the last section. While on a visit to the villages for food, Bhikṣus are expected to stand at a place where they can be easily seen. They should not shout, "give me food" but stand in silence. Bhikṣus are supposed to understand on the basis of various indications on the part of the house-holders, whether they are likely to offer something or not and may wait or leave the place accordingly.

It is the duty of preceptors and teachers to instruct their disciples as to where they should receive food and where they should not.

## VII – SEVENTH & LAST CHAPTER : Pradīpa

This chapter deals with several groups of rules on lamps, staffs, seats and slippers etc.

Lamps are allowed into the Vihāras in order to remove darkness. In this case too, the same usual method is to be followed. To put it in brief, there should be a Bhikṣu specially appointed for keeping lamps. It is his responsibility to supply all necessary things such as oil and wicks etc., and to light the lamps at regular times. First of all, the chamber dedicated to the Buddha is to be illuminated and then the ground floor of the dwelling, latrine etc. Meditating Bhikṣus should be rendered assistance in this respect.

Then comes the regulations regarding the staff which is permissible for the use of monks. The measurement of the staff should be eight cubits in length and its thickness should be equal to that of a fist. It should be bound with iron rings on both ends. Some rules have been framed regulating its use as well. Distinct rules are also promulgated for the use of a particular utensil known as 'Genduka', as well as for the use of the seat belonging to the Brotherhood (Saṅgha). Thereafter follow series of the rules regarding coughing, sneezing, itching of one's body,

yawning and breaking-wind (Vātakarma). The chapter closes with a summary of contents and with the following colophon :—

"Arya mahāsāṅghikānām lokottaravādinām madhyadeśapāṭhakānām pāṭhene'ti."

# अभिसमाचारिका

## [ नाम भिक्षु प्रकीर्णकः ]

[ 10B. P. 5. L. 1. ] ॥ ओं नमो बुद्धाय ॥

अभिसमाचारिकाणामादिः ।

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा संघस्य दानि पोषधो ।

आयुष्मां नन्दनो संघस्थविरो । उपनन्दनो द्वितीयस्थविरो । दायकदानपति[१] पृच्छन्ति । आर्य, किं समग्रो भिक्षुसंघो? आहंसु— नो दीर्घायु । को दानि नागच्छति ? भिक्षू आहंसु— संघस्थविरो नागच्छति । ते दानि ओज्झा[10B. P. 5. L. 2.]यन्ति[२] । पश्यथ भणे, वयन्ताव कर्मान्तान् ते दानि च्छोरिय आगच्छाम । समग्रस्य संघस्य पादान्[३] वन्दिष्यामः । देयधर्म्मश्च प्रतिष्ठापयिष्यामः । संघस्थविरो नागच्छति ।

सो दानि पश्चादागत्वा संक्षिप्तेन चत्वारि पाराजिकान् धर्म्मान्[४] उद्देशियाण नो च दक्षिणामादिशति । न परिकथां करोति । उत्थिय गतो । नवका भिक्षू पृच्छन्ति— आयुष्मान्नागतो संघस्थविरो ? भिक्षू आहंसु— आगतो- [10B. P. 5. L. 3.]च गतो च। तेपि नवका भिक्षू आहंसु— नैव संघस्थ-

---

१. Ms. दायकदानपती ।

२. Pali—उज्झायन्ति, but in subsequent pages of this book it is mainly ओध्यायन्ति ।

३. Ms. पादान ।

४. Ms. धम्मान ।

विरस्य आगतिः प्रज्ञायते न गतिः। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ नन्दनं। सो दानि शब्दापितो। भगवानाह— सत्यं नन्दन, एवं नाम संघस्य पोषधो ति। तदेव सर्वं भगवान् विस्तरेण प्रत्यारोचयति। नवका भिक्षू ओज्झायन्ति[१]। नैव संघस्थविरस्य [10B. P. 5. L. 4.] [आ]गतिर्न्नगतिः प्रज्ञायतेति। आह— आम भगवन्।

भगवानाह— तेन हि एवं संघस्थविरेण पोषधे प्रतिपद्यितव्यं। किन्ति दानि संघस्थविरेण पोषधे प्रतिपद्यितव्यं। यदहो संघस्य पोषधो भवति तदहो संघस्थविरेण जानितव्यं। किमद्य संघस्य पोषधो— चातुर्दशिको [वा] पाञ्चदशिको [वा] सन्धिपोषधो [वा] भविष्यतीति। किं पूर्व्वं भक्तं किं पश्चा[10B. P. 5.L. 5.]द्भक्तं केत्तिक पौरूषाहिच्छायाहि। कहिम्भविष्यति— प्रहाणशालायाम्वा उपस्थानशालायाम्वा अग्निशालायाम्वा मण्डलमाडे[२] वा। यस्मिन् प्रदेशे यं दिवसं संघस्य पोषधो भवति, संघस्थविरेण पञ्चसूत्राणि विस्तरेण स्वाध्यायितव्यानि। यावन्तमसतो चत्वारि पाराजिका गाथाव्व-वशिष्टकमभीक्ष्ण[३] श्रुतिकाया। यदि दानि न गतो सं[10B. P. 5. L.6.]घो भवति, संघस्थविरेण यहिं भविष्यति तहिं आरोचयितव्यः— आयुष्मन्, अद्य संघस्य पोषधो, चातुर्दशिको वा पाञ्चदशिको वा सन्धिपोषधो वा। अमुकहिं भविष्यति—प्रहाणशालायाम्वा उपस्थानशालायाम्वा मण्डलमाडे वा। पुरे भक्तम्वा पश्चाद्भक्तम्वा। अतिक्रमन्तु आयुष्मन्तो, नापि दानि आरोचितं मया ति। पात्रोल्लग्निकाय[४] आसितव्यं।

---

१. Ms. ओज्झोपन्ति, Pali उज्झायन्ति, accompanied always by other two terms खीयन्ति and विपाचेन्ति।
२. Ms. मण्डलमाडि, Pali— माले।
३. Ms. गाथाश्ववसिष्टकम ।
४. Ms. पत्रोल्लमिकाये।

अथ खलु प्रति[10B.P. 5. L.7.]कृत्येव पोपधस्थानं गन्तव्यं। सिञ्चापयितव्यो सन्मार्जयितव्यो गोमयकार्षी दातव्या आसनप्रज्ञप्ति कर्त्तव्या। विभवो भवति, शलाका गन्धोदकेन धोवितव्या[1] पुष्पेहि ओकिरितव्या[2]। संघस्थविरेण जानितव्यं, को शलाकां चारयिष्यति को प्रतिच्छिष्यति को प्रातिमोक्षसूत्रं उद्दिशिष्यति को दक्षिणां आदिशिष्यति को परिकथां करिष्यति। यो प्रति[10A. P. 6. L. 1.]बलो भवति सो अध्येषितव्यो। अयं सानं शलाकां चारेषि। त्वं शलाकां प्रतिच्छेसि। त्वं प्रतिमोक्षसूत्रमुद्दिशेषि। त्वं भासेसि। त्वं परिकथां करेसि। त्वं दक्षिणां आदिशेसि।

तेन यथाध्येष्टेन शलाका चारयितव्या। द्वितीयेन प्रतीच्छितव्या। नापि[3] क्षमति शलाकां चारयन्तेन अनिर्मादिय हस्तां शलाकां चारयितुं। नापि क्षमति ओगुण्ठिकाय कृतेन उपानहा[10A. P. 6. L. 2.]रूढेन वा शलाकां चारयन्तं। अथ खलु हस्तां निर्मादिय ओगुण्ठिकां अपनिय उपानहां ओमुञ्चिय एकांशकृतेन[4] शलाका चारयितव्या। शलाकां पि दानि गृह्णन्तेन न चापि क्षमति ओगुण्ठिकाकृतेन वा उपानहारूढेन वा शलाकां गृह्णितुं।

अथ खलु एकांशकृतेन हस्तान्निर्मादिय ओगुण्ठिकां अपनिय उपानहां ओमुञ्चिय शलाकां गृह्णितव्या। यं कालं [10A. P. 6. L. 3.] शलाका चारिता भवन्ति। भिक्षू गणिता भवन्ति। सामग्री आरोचिता भवति। दायकदानपति[5] परिपृच्छितव्या— किम्वसिष्यथ अथ गमिष्यथ?

---

१. Ms. धोवितव्यायो।
२. Ms. ओकिरितव्यायो।
३. Ms. seemed येपि which is doubtful।
४. Ms. एकांसकृतेन।
५. Some times it is दायकदानपती।

यदि तावाहंसु— गच्छाम। ततो देयधर्मो प्रतिष्ठापयितव्यं। देयधर्ममनु-मोदापयितव्यं। धार्म्या कथया संदर्शयितव्याः समादापयितव्याः समुत्तेजयितव्याः संप्रहर्षयितव्याः [10A. P.6. L.4.] उद्योजयितव्याः। अथ दानि आहंसु– वसिष्यामन्ति। वक्तव्यं– गच्छथ ताव, बाह्यतो आमूहूर्त्तं आगमेथ। भिक्षुसंघो[1] ताव पोषधं करिष्यति। यं कालं दायकदानपति निर्धाविता[2] भवन्ति। ततो सूत्रोद्देशकेन जानितव्यं।

यदि ताव नाप्यातिशीतम्भवति[3] नाप्यातिउष्णं[4]। न दूरदूरे विहारका भवन्ति। भिक्षू वा न जरा दुर्बला न व्या[10A. P. 6. L. 5.]धि[5] दुर्बला वा भवन्ति। न वा सिंहभयम्वा व्याघ्र भयम्वा चौरभयम्वा। भिक्षू वा सुखोपविष्टा भवन्ति। यदि ताव विस्तरेण प्रतिमोक्षसूत्रं श्रोतुकामा भवन्ति। विस्तरेण प्रातिमोक्षसूत्रं उद्दिशितव्यं। अथ दानि अतिशीतम्वा[6] [अति] उष्णम्वा भवति। भिक्षू वा जरादुर्बला वा व्याधिदुर्बला वा भवन्ति। सिंहभयम्वा व्याघ्रभयम्वा चौरभयम्वा। भिक्षू च [10A. P. 6. L. 6.] न विस्तरेण प्रातिमोक्षसूत्रं श्रोतुकामा भवन्ति। संक्षिप्तेन चत्वारि पाराजिकां धर्मां उद्दिशियानं [अव]शिष्टकं अभीक्ष्ण श्रुतिकाये गाथाये च। ततो यथा सुखं कर्त्तव्यं।

अथदानि सर्वरात्रिका भवति। ततो अध्येपितव्यं— त्वं भाषयेसीति। यथाध्येष्टेहि भाषमाणं सर्वरात्रिं धर्मवृष्टिये[7] वीतिनामियानं दायकदानपति

---

१. Ms. भिक्षु संघो।
२. Ms. निर्धारिता।
३. Ms. नात्याशीतम्भवति।
४ Ms. नात्यातिउष्णं।
५. Ms. नद्याधि।
६. Ms. सीतम्वा।
७. Ms. धर्मवृष्टिये।

धर्म्या कथया संदर्शयितव्या समादा[10A. P. 6. L. 7.]पयितव्या समुत्तेजयितव्या संप्रहर्षयितव्या उद्योजयितव्या। यथासुखं कर्त्तव्यं। अभिप्रमोदन्तु आयुष्मन्तो, एवं संघस्थविरेण पोषधे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिका[न्] धर्मां अतिक्रमति।

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा संघस्य दानि पोषधो। आयुष्मां नन्दनो [10B. P. 6. L. 1.] संघस्थविरो। उपनन्दनो द्वितीयस्थविरो। संघस्थविरो आगतो। भिक्षू आगता। द्वितीयस्थविरो नागच्छति। दायकदानपति दानि देयधर्माणि आदाय प्रतिपालेन्ति। समग्रं[1] च भिक्षुसंघम्वन्दिष्यामः। देयधर्मञ्च प्रतिष्ठापयिष्यामोति। ते दानि पृच्छन्ति—आर्य, समग्रो भिक्षुसंघो? आहंसु—नोहेतं दीर्घायू। को खलु नागच्छति? आहंसु— द्वितीयस्थविरो नागच्छ[10B. P. 6. L. 2.]ति। ते दानि ओज्झायन्ति। वयं पि[2]ताव कर्मान्तां छोरिय आगता। गच्छाम। समग्रस्य संघस्य पादां वन्दिष्यामः। देयधर्मञ्च प्रतिष्ठापयिष्यामः। द्वितीयस्थविरोपि नागच्छति। ते दानि मूहूर्त्तमात्रं प्रतिपालिय आसित्वा देयधर्मं प्रतिष्ठापयित्वा गताः।

सो दानि अतिविकाले आगतो। संघस्थविरो ओज्झायति। अस्माकं भगवान्दण्डकर्मन्देति[3]। द्वितीयस्थविरस्य [10B. P. 6. L. 3.] सोन्तिका[4]। एतं प्रकरणं भिक्षू भगवतो आरोचयन्ति। भगवानाह—शब्दापयथ उपनन्दनं। सो दानि शब्दापितो। भगवानाह—सत्यं उपनन्दन,

---

१. Ms. समयं।

२. Ms. ये।

३. Ms. °दति।

४. Ms. मोन्तिका।

एवं दानि संघस्य पोषधोति। तदेव सर्वं भगवां विस्तरेण प्रत्यारोचयति। याव संघस्थविरोपि ओज्भायति—अस्माकं भगवां दण्डकर्मन्देति। द्वितीयस्थविरस्य सोन्तिका [10B. P. 6. L. 4.] आह। आम भगवन्, भगवानाह—तेन हि एवं द्वितीयस्थविरेण पोषधे प्रतिपद्यितव्यं। किन्तिदानि द्वितीयस्थविरेण पोषधे प्रतिपद्यितव्यं? यदहो दानि संघस्य पोषधो भवति संघस्थविरो न प्रतिबलो भवति। द्वितीयस्थविरेण जानितव्यं। किं अद्य संघस्य पोषधो—चातुर्दशिको[1] वा पाञ्चदशिको वा सन्धिपोषधो वा। किं रा[10B. P. 6. L. 5.]त्रिपोषधो भविष्यति दिवापोषधो। पुरे भक्तं भविष्यति पश्चाद्भक्तं। कहिं भविष्यति—उपस्थानशालायाम्वा प्रहाणशालायाम्वा माण्डलमाडे वा उच्छिदनके वा निषद्याय वा त्ति। यहिम्भवति तहिं आरोचयितव्यं— आयुष्मन्, अद्य संघस्य पोषधो, चातुर्दशिको वा पाञ्चदशिको वा।

अथ दानि संघस्थविरो न प्रतिबलो भव[10B. P. 6. L. 6.]ति द्वितीयस्थविरेण अकृत्येव पोषधस्थानं सिञ्चापयितव्यं सन्मार्जयितव्यं गोमयकार्षी दातव्या। आसनप्रज्ञप्तिः कर्त्तव्या। विभवो भवति शलाका गन्धोदकेन धोवयितव्या[2]। पुष्पेहि ओकिरितव्या[3]। संघस्थविरो न प्रतिबलो भवति, द्वितीयस्थविरेण जानितव्यं, को शलाकां चारयिष्यति को शलाकां प्रतिच्छिष्यति को प्रतिमोक्षसूत्रमुद्दिशिष्य[10B. P. 6. L. 7.]ति को भाषिष्यति को दक्षिणां आदिशिष्यति को परिकथां करिष्यति। यो प्रतिबलो भविष्यति सो अध्येषितव्यो— त्वं शलाकां चारयिष्यसि त्वं प्रतिच्छेष्यसि याव त्वं परिकथां कारयसीति। ततो शलाकां चारन्तेन न

---

१. Ms. चतुर्दशिको।

२. Ms. धोवयितव्याये।

३. Ms. ओकिरितव्यायो।

क्षमति ओगुण्ठिकाकृतेन वा उपानहारूढेन वा हस्तेहि वा अनिर्मादितेहि शलाकां चारयितुं ।

अथ खलु हस्तान्निर्मादियानं उपानहां ओमुञ्चिय [10A. P.7.L.1.] एकांशकृतेन शलाका चारयितव्या । शलाकां पि प्रतिच्छन्तेन न क्षमति ओगुण्ठिकाकृतेन वा उपानहारूढ़ेन वा हस्तेहि वा अनिर्मादितेहि शलाकां प्रतिच्छितुं[१] ।

अथ खलु हस्तान्निर्मादियाण उपानहां ओमुञ्चियाण एकांशकृतेन शलाका प्रतिच्छितव्या । यदा शलाका चारिता भवन्ति, भिक्षू गणिता भवन्ति, सामग्री आरोचिता भवति, ततो दायकदानपति पृच्छि-[10A. P.7.-L. 2.]तव्याः—किम्वसिष्यथ अथ[२] गमिष्यथ । यदि ताव जल्पन्ति—गच्छाम । ततो देयधर्मं प्रतिष्ठापयितव्या । देयधर्मो अनुमोदापयितव्यो । परिकथा कर्त्तव्या । धार्म्या कथया संदर्शिय समादापिय समुत्तेजिय सम्प्रहर्षयित्वा उद्योजयितव्या ।

अथ दानि जल्पन्ति– वसिष्यामन्ति, वक्तव्यं– मूहूर्त्तन्ताव बाह्यतो आगमेथ । संघो ताव पोषधं करिष्यति । यदि[३] काले दायकदानपति [10A.-P. 7. L. 3] निर्धाविता भवन्ति ततो सूत्रोद्देशकेन जानितव्यं । यदि ताव अतिशीतम्वा अतिउष्णम्वा भवति । भिक्षू वा जरादुर्बला वा व्याधि-दुर्बला वा भवन्ति दूरदूरे वा परिवेणा भवन्ति । सिंहभयम्वा व्याघ्रभयम्वा चोरभयम्वा भवति । भिक्षू वा न विस्तरेण श्रोतुकामा भवन्ति । संक्षिप्तेन

१. Ms. प्रतिच्छित्तुं ।

२. Ms. उत; it is अथ in 10A. P. 8. L. 1.

३. Ms. यदा ।

चत्वारि पाराजिका उद्दिशितव्या[१]। [अव]शिष्टकं अभीक्ष्ण श्रुतिकाये गा[10A. P. 7. L. 4.]थाये[२] च। ततो यथासुखं कर्तव्यं।

अथ दानि नाप्यातिशीतं[३] न चाप्यातिउष्णं[४]। न दूरदूरे परिवेणा भवन्ति। भिक्षू च सुखोपविष्टा भवन्ति विस्तरेण श्रोतुकामा। ततो विस्तरेण प्रातिमोक्षसूत्रं उस्सारयितव्यं। ततो यथासुखं कर्तव्यं।

अथ दानि सर्व्वरात्रिका भवति संघस्थविरो न प्रतिबलो भवति द्वितीयस्थविरेण अध्येपितव्यं—त्व-[10A. P. 7. L. 5.]या भाषितव्यं त्वया भाषितव्यं। यथाध्येष्टेहि भाषमाणं[५] सर्वरात्रिं धर्मवृष्टिये वीतिनामियानं[६] दायकदानपति धार्म्या कथया सन्दर्शिय समादापिय समुत्तेजिय संप्रहर्षयित्वा उद्योजयितव्या। ततो यथासुखं कर्तव्यं। अभिप्रमोदयन्तु आयुष्मन्तो, अभिप्रमोदयन्तु आयुष्मन्तो, अप्रमादेन संपादयितव्यं। एवं द्वितीयस्थवि-[10A. P. 7. L. 6.]रेण पोषधे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकां धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा संघस्य दानि पोषधो। आयुष्मान्नन्दनो संघस्थविरो। उपनन्दनो द्वितीयस्थविरो आगतो। भिक्षू ओसरन्तिकाये न आगच्छन्ति। दायकदानपति पृच्छन्ति—आर्य, समग्रो भिक्षूसंघो? भिक्षू आहं [10A. P. 7. L. 7.] सु— नीहीदं दीर्घायू। को खु नागच्छति? भिक्षू आहंसु—

१. Ms. उद्दिशिनव्यं।
२. Ms गायायो।
३. Ms. नात्यातिशेतं।
४. Ms. चात्यातिउष्णं।
५. Ms. भाषणाय। but cf. 10A, P6, L6.=Page 4
६. Ms. वीतिनामिय। न

नोहीदं दीर्घायू, को खु नागच्छति ? भिक्षू आहंसु—एते हि भिक्षू ओसरन्तिकाये न आगच्छन्ति। ते दानि ओज्झायन्ति—वयं पि च[1] कर्मान्तां च्छोरिय च्छोरिय[2] आगच्छाम, आगता। समग्रस्य [ संघस्य ] पादां वन्दिष्याम । देयधर्मञ्च प्रतिष्ठापयिष्यामः । इमे पि आर्यमिश्रा ओसरन्तिकाये[3] नागच्छन्ति। संघस्थविरो च द्वितीयस्थविरो च ओध्यायन्ति— अस्माकं भगवां दण्डकर्मन्देति। एषां [10B. P. 7. L. 1. ]सोन्तिका[4]। भिक्षू एतम्प्रकरणं [भगवतो] आरोचयन्ति। भगवानाह—शब्दापयथ भिक्षून्[5]। ते दानि शब्दापिताः। भगवानाह — सत्यं भिक्षवो, एवं दानि संघस्य पोषधोति तदेव सर्वं भगवान् विस्तरेण प्रत्यारोचयति। याव संघस्थविरो च द्वितीथस्थविरो च ओध्यायन्ति। अस्माकं भगवान्दण्डकर्मन्देति। इमेषां सोन्तिका[6] आहंसुः। आम भगवन् , भगवानाह—तेन हि सर्वेहि एवं [10B. P.7. L.2.] पोषधे प्रतिपद्यितव्यं। किन्ति दानि एवं सर्वेहि पोषधे प्रतिपद्यितव्यं। सर्वेहि जानितव्यं। किं खल्वद्य पक्षस्य — प्रतिपदा, द्वितीया यावत् पञ्चदशी। यदि दानि कोचि पृच्छति। भन्ते, कतमाद्य। न दानि वक्तव्यं — कतमा पुन हियोभूषीति। अवश्यं वंसविदलिकाहि वा नलविद-लिकाहि वा लिखित्वा सूत्रेण आव्रणित्वा द्वारकोष्ठके वा प्रासादे वा कल्पिय कुटिकायां वा बन्धितव्यं [10B. P.7. L.3. ] कीलकानि खनित्वा द्वारे

---

१. Ms. ये च।

२. Ms. आगच्छाम। आगता

३. Ms. ओसरतिका।

४, Ms. मोन्तिको।

५. Ms. भिक्षु न।

६. Ms. Same as No. ४।

स्थातव्यं[1]। यो दानि भवति मासचारिको वा पक्षचारिको [वा] तेन एकमेकं संसारयितव्यं। देवसिकं यथाज्ञायेत कतिमाद्य सर्वेहि जानितव्यं। एषो दानि संघस्य पोषधो भवति। संघस्थविरो न प्रतिबलो भवति। द्वितीयस्थविरो न प्रतिबलो भवति। यो तत्र प्रतिबलो भवति तेन जानितव्यं—किमद्य संघस्य [10B. P. 7. L. 4.] पोषधो चातुर्दशिको वा पाञ्चदशिको वा सन्धिपोषधो वा दिवारात्रौ वा पोषधो[2]। पुरोभक्तं वा पश्चाद्भक्तं वा। कति पौरूषाहि छायाहि। कहिं भविष्यति—प्रहाणशालायाम्वा उपस्थानशालायाम्वा मण्डलमाडे वा उच्छिदनिके[3] [वा] चंक्रमे वा निपद्यायन्ति। यहिं भवति तहिं आरोचयितव्यं। अभिक्रमन्तु आयुष्मन्तो। तेनायं आरोचितं म-[10B. P.7. L.5.]याति। पात्रोञ्झनिकाये आसितव्यं।

अथ खलु यदि ताव संघस्थविरो न प्रति[बलो] भवति। यो तत्र प्रतिबलो भवति तेन प्र[ति]कृत्येव पोषधस्थानं गन्तव्यं। पोषधस्थानं सिञ्चितव्यं सन्मार्जितव्यं गोमयकार्षी दातव्या आसनप्रज्ञप्तिः कर्तव्या। विभवो भवति शलाका गन्धोदकेन धोवितव्या पुष्पेहि [ 10B. P.7.-L. 6.] ओकिरितव्या। संघस्थविरो न प्रतिबलो भवति द्वितीयस्थविरो न प्रतिबलो भवति। यो तत्र प्रतिबलो भवति तेन जानितव्यं—को शलाकां चारयिष्यति को शलाकां प्रतिच्छिष्यति को प्रातिमोक्षसूत्रमुद्दिशिष्यति को दक्षिणां आदिशिष्यति को परिकथां करिष्यति। यदि तावत्प्रतिबलो भवति आत्मना सर्व्वं कर्तव्यं। अथ दानि न प्रतिबलो भवति यो तत्र प्रति-[10B. P.7. L.7.]बलो भवति सो अध्येषितव्यो— त्वं शलाकां

---

१. Ms. व्य repeats twice.

२. Ms. पोषधे।

३. Ms. ओच्छेदके cf. 10B. P.6. L.5.

चारयेसि त्वं शलाकां प्रतिच्छेसि त्वं प्रातिमोत्तं उद्दिशेसि त्वं भाषेसि त्वं दक्षिणां आदिशेषि त्वं परिकथां कारयेसि। शलाकां पि च चारयन्तेन न क्षमति अनिर्मादितकेहि हस्तेहि [वा] उपानहारूढेन [वा] ओगुण्ठितेन वा शलाकां चारयितुं।

अथ खलु हस्तां निर्मादिय उपानहां ओमुञ्चिय एकांशकृतेन शलाका चारयितव्या। [10A. P. 8. L.1.] शलाकां पि दानि प्रतिच्छन्तेन न क्षमति अनिर्मादितकेहि हस्तेहि [वा] उपानहारूढेन वा ओगुण्ठिकाकृतेन वा शलाकां प्रतिच्छितुं।

अथ खलु हस्तां निर्मादियाण उपानहां [ओ]मुञ्चिय एकांशकृतेन शलाका प्रतिच्छितव्या। यं कालं शलाका चारिता भवन्ति भिक्षू गणिता भवन्ति सामग्री आरोचिता भवति दायकदानपति पृच्छितव्याः— किम्वशिष्यथ अथ[1] [10A. P. 8. L. 2.] गमिष्यथ[2]। यदि ताव जल्पन्ति, गच्छामत्ति[3]। देयधर्मं[4] प्रतिष्ठापयितव्यो देयधर्ममनुमोदापयितव्यो। धार्म्या कथया संदर्शिय समादापिय समुत्तेजिय संप्रहर्षयित्वा उद्योजयितव्या। अथ दानि[5] जल्पन्ति, वसिष्यामत्ति। वक्तव्यं — बाह्यतो ताव यूयं मुहूर्त्तमागमेथ। संघो ताव पोषधं करिष्यति। यं कालं दायकदानपति निर्धाविता भवन्ति ततो सूत्रोद्देश-[10A. P. 8. L.3.]केन जानितव्यं। यदि ताव नातिशीतं भवति नात्युष्णम्वा। चोरभयम्वा न भवति सिंहभयम्वा व्याघ्रभयम्वा न

१. Ms. Some times it is उत vide. 10A. P. 7. L. 2.

२. Ms. गच्छथ cf. 10A. P. 7. L. 2. and also in subsequent pages.

३. Ms. गच्छामन्ति।

४. Ms. धर्म।

५. Ms. अये दानि।

भवति न दूरदूरे वा परिवेणा भवन्ति भिक्षू वा न जरा दुर्बला वा व्याधि दुर्बला भवन्ति सुखोपविष्टा भवन्ति विस्तरेण श्रोतुकामा भवन्ति ततो विस्तरेण प्रातिमोक्षसूत्रं उद्दिशितव्यं।

अथ दानि सर्व्वरात्रिका भवति भाषणका अध्येषितव्याः— [10A.-P. 8. L. 4. ] त्वया भाषितव्यं, त्वया भाषितव्यन्ति। यथाध्येष्टेहि[1] भाषियाणं सर्व्वरात्रि धर्मवृष्टिये वीतिनामियनं दायकदानपति धाम्यां कथया संदर्शितव्या। याव उद्योजयितव्या। ततो यथासुखं कर्त्तव्यं। अभिप्रमोदन्तु[2] आयुष्मन्तो, अप्रमादेन संपादयितव्यं। एवं सर्व्वेहि पोषधे प्रतिपद्यितव्यं। न प्रतिपद्यन्ति विनयातिक्रममा [10A. P. 8. L. 5, ] सादयन्ति ॥३॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च। विस्तरेण निदानं कृत्वा। संघस्य दानि वाहिरकं भक्तं। आयुष्मान् नन्दनो संघस्थविरो। उपनन्दनो द्वितीयस्थविरो, आगतो। भिक्षू आगताः। संघस्थविरो नागच्छति। ओदनो शीतलो भवति सूपो[3] शीतलो भवति घृतं थीयति मांसं थीयति व्यञ्जनानि शीतली [10A. P. 8. L. 6. ] भवन्ति। दायकदानपति पृच्छन्ति। आर्य, किं समग्रो भिक्षुसंघो? आहंसु— नोहीदं दीर्घायू, को खु नागच्छति? आहंसु— संघस्थविरो नागच्छति। ते दानि ओज्झायन्ति। वयं येव ताव[5] कर्मान्तां च्छोरिय आगच्छाम। आगता। समग्रं भिक्षुसंघं परिविशिष्यामः। संघस्थविरोपि नागच्छति।

१. Ms. ॰ध्येष्टिहि।
२. Ms. अतिप्रमादेतु।
३. Ms. स्तूपो।
४. Ms. शीतलं।
५. Ms. ये च।

सो दानि पश्चादागच्छियाण भुंजियाण संक्षिप्तेन दक्षिणामादिशिय न परिकथां [10A. P. 8. L. 7.] करोति। नापि दायकदानपतिं धार्म्या कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति उत्थिय[1] गतो। नवका भिक्षू पृच्छन्ति—आगतो संघस्थविरो? आहंसु—आगतो च गतो च। ते दानि ओध्यायन्ति[2]—नैव संघस्थविरस्य आगतिर्नगतिः प्रज्ञायति। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु।

भगवानाह—शब्दापयथ नन्दनं। सो [10B. P. 8. L. 1.] दानि शब्दापितो। भगवानाह— सत्यं नन्दन, एवन्नाम संघस्य वाहिरकं भक्तं। [नन्दनो] संघस्थविरो उपनन्दनो द्वितीयस्थविरोति। तदेव सर्व्वं भगवान् विस्तरेण प्रत्यारोचयति। याव नवका भिक्षु ओध्यायन्ति। याव संघस्थविरस्यगतिर्नगति प्रज्ञायते— आह। आम भगवन्। भगवानाह—तेन हि संघस्थविरेण एवं भक्ताग्रे प्रतिपद्यितव्यं। किन्तिदानि संघस्थविरे-[10B. P. 8. L. 2]ण एवं भक्ताग्रे प्रतिपद्यितव्यं। संघस्थविरेण जानितव्यं। कस्याद्य भक्तं। उभयतो सांघिकं। सर्व्वं सांघिकं। परिवेणिकं। पाटिय[क]भक्तं[3]। ग्रामे विहारे।

एपो दानि कोचि संघं भक्तेन शुवेतनाय[4] निमन्त्रेति। न दानि संघस्थविरेण गतागतस्य अधिवासयितव्यं। अथ खलु संघस्थविरेण जानितव्यं। कोयं निमन्त्रेति -- आगन्तुको गमिको गृहस्थो प्रव्रजितो स्त्री पुरुषो दा-[10B. P. 8. L. 3.]रको दारिका। पृच्छितव्यं— किन्नामकोसि

---

१. Ms. उत्थिहि।

२. Ms. ओध्यायति but in many places it is ओज्फायन्ति।

३. Pali—Pāṭekka, mostly Pāṭiyekka.

४. Pali—Svātanāya.

किङ्गोत्रकोसि। किं कर्मिका ते मातापितरौ। कतमं देशं गृहं। कतमायां रथ्यायां। कुतो मुखं गृहस्य वा। साकारं सोद्देशं पृच्छियाणं ततोधिवासयितव्यं। नापि दानि अधिवासितमयेति पात्रोल्लग्नाये[1] आसितव्यं। अथ खलु प्रतिकृत्येव[2] मासचारिको [वा] पक्षचारिको वा प्रेषयितव्यो। गच्छ, जाना-[10B. P. 8. L. 4.]हि किं सज्जियतीति। अनेकाय तहिं[3] जातकं भवेय। मृतकम्वा भवेय। सन्धि वा छिन्नो। अग्निदाहो वा राजकुलातो वा उपद्रवो। ढोस्सा[4] वा विद्वा वा वातपुत्रो वा विहेठनाभिप्राया निमन्त्रयेंसु।

तेन गच्छिय पृच्छितव्यं—कोचि इमं हि इत्थन्नामो नाम उपासको ? यदि ताव आहंसु—नास्ति अस्माकं कोचि एवं नाम उपासको। वक्तव्यं—भिक्षु-[10B. P. 8. L. 5.]संघो तेन निमन्त्रितो। किं सिध्यति वा पच्यति वा। यदि ताव आहंसु— कस्य भक्तं कस्य सिध्यति कस्य पच्यतीति। जानितव्यं — विप्रलब्धो भिक्षुसंघोति। आगच्छिय यदि ताव अनुग्रहो भवति अनुग्रहो साधयितव्यो। अनुग्रहो न भवति भक्तानि भवन्ति भक्तानि उद्दिशितव्यानि। भक्तानि न भवन्ति रणरणा[य]गण्डी आहणिय वक्तव्यं— आयु-[10B. P. 8. L. 6.]ष्मन्, विप्रलब्धो भिक्षुसंघो। स्वकस्वकां वृत्तिं पर्येपिथ। सर्व्वेहि पटिपाटिकाय पिण्डाय प्रविशितव्यं। अथ दानि ते जल्पन्ति — भन्ते, एतं सिध्यति। प्रविशतु भिक्षुसंघोति। ततो रणरणाय गण्डी आहणिय। यदि ताव हेमन्तो भवति अनुकाल्यं

---

१. Ms. पत्रोल्लग्नाये।

२. Ms. प्रकृत्येव।

३. Ms. तहि।

४. ...Doubtful.

प्रविशितव्यं। मा कालोतिक्रमिष्यतीति[1]। अथ दानि ग्रीष्मो कालो भवति शीतलकसंगेन अनुकाल्यं प्रविशितव्यं। अथ [10B. P. 8. L. 7.] दानि वर्षारात्रो कालो भवति दिवान्तरायेन[2] अनुकाल्यं प्रविशितव्यं। मा कालो अतिक्रमिष्यतीति। यदि ताव संज्ञम्भवति महन्तो च कालो भवति कहिञ्चि च गन्तुकामो भवति कस्यचित्[3] भिक्षुस्य जल्पितव्यं –– अमुकं कुलं उपसंक्रमिष्यथ। यदा संज्ञं भवेय ततो मा पटिसरेसि। न दानि तेन आमन्त्रितं मयाति। भद्रपालकृत्येहि हण्ठितव्यं।

अथ खलु प्रति-[11A. P. 1. L. 1.]कृत्येव आगन्तव्यं। प्रविशन्तेहि[4] जानितव्यं— कथं आसना प्रज्ञप्ताः। अतिदक्षिणं, अनुवामं। कदाचि मङ्गलकरणीये अतिदक्षिणं[5] प्रज्ञप्तं भवति, तथा येव उपवेष्टव्यं। अथ दानि प्रेतकरणीये अनुवामं प्रज्ञप्तं भवति, तथा येव उपवेष्टव्यं। नापि दानि क्षमति प्रविशन्तेहि भण्डं लंघंतेहि दारकदारिकां लंघंतेहि गन्तुं।

अथ खलु भण्डं प-[11A. P. 1. L. 2.]रिवर्जन्तेहि कांसभाजनं परिवर्जन्तेहि दारकदारिकां परिवर्जन्तेहि[6] प्रविशितव्यं। नापि दानि क्षमति गतागतस्य उपविशितव्यं। अथ खलु हस्तेन आसनं प्रत्यवेक्षितव्यं। अनेकायो तत्र गर्भरूपाणि सोपायितकानि भवेंसुः। कांसभाजनानि वा थापितकानि भवेंसुः। अथ खलु हस्तेन परामृशियाण[7] जानितव्यं। ओद्देष्यकानां

---

१. Ms. कालोतिक्रयि°।
२. Ms. देवान्तरायेन।
३. Ms. कस्यचित।
४. Ms. प्रविशतेहि।
५. Ms. अभि°।
६. Ms. सपरिवर्ज्जन्तेहि।
७. Ms. परांमृशियाण।

ग्लानकां प्रतिकृत्ये-[11A. P. 1. L. 3.]व दापितव्यं। अथ दानि सो मनुष्यो अनाचीर्णदानो वा भवति। तिन्तिनो वा भवति। न दानि अभ्यु-पेक्षितव्यं। वक्तव्यं—दीर्घायू, अवश्यन्तेषां दातव्यं पिण्डपातं। अथ दानि दायकदानपति जल्पन्ति— पटिपाटिकाय गृह्णथन्ति[1]। हेमन्तो च कालो भवति। वक्तव्यं— नहिन्ति। भगवता अनेक पर्यायेण ग्लानो परित्तो। किम्वा अम्भेहि[2] विहार शू-[11A. P. 1. L. 4.]न्यं शक्यं कर्त्तुं ति[3]। लघु कालो अतिक्रमति। देथ यूयन्ति। अथ दानि ग्रीष्मो वा वर्षा वा रात्रो वा[4] कालो भवति। चिरेहि कालो अतिक्रमति। पटिपाटिकाय गृह्णि-तव्यं। ततो संघस्थविरेण जानितव्यं —– किं आरभ्य देति। तथा ये च निमन्त्रणायेतव्यं। भोजनं दीयते। महन्तो पिण्डो परिगृहीतो भवति। संघस्थविरेण वक्तव्यं— सर्व्वेषां एत्त-[11A. P. 1. L. 5.]कं एत्तकं[5] भविष्यति। आह—नहि आर्यस्य एतं एवं दीयति। वक्तव्यं— तथा देहि यथा सर्वेषां समं भवति। अथ दानाह—भविष्यतीति। प्रतीच्छितव्यं।

अथ दानि सो थोकिना अर्थिको[6] भवति। वक्तव्यं—मम थोकं देहि। हेष्ठा विद्धं एवं पि सूपस्य घृतस्य मांसस्य ओदनकानां दधिस्य। ततो नापि क्षमति संघस्थविरेण लब्धो पिण्डो[11A. P.1. L.6.] द्वारं पश्यिय लप्यलप्याये[7] भुंजियाण उत्थिहिय गन्तुं।

---

१. Ms. एह्नन्ति।
२. Ms. अन्तेहि।
३. Ms. इच्छन्ति।
४. The last 3 letter do not give clear reading.
५. Ms. एतु कं एतुकं।
६. Ms. अथिको।
७. Ms. लप्यलयाये, possibly लम्यलम्याये as in 11A P 1. L 6.।

अथ खलु ओदनसम्पत्तिर्वा आगमंतेन भुंजितव्यं। व्यञ्जनसम्पत्तिर्वा आगमंतेन भुञ्जितव्यं। न[1] भुञ्जित्वा हस्तं[2] निक्षिपिय आसितव्यं। माहेव ओत्रपेंसु[3]। अथ खलु अनुजानितव्यं[4]। यदा नवकाः सन्तर्पिता भवन्ति। उपग्रायन्ति[5] पानीयं वा पिबन्ति। हस्तम्वा उक्कड्ढिय[6] आसन्ति। न दानि संघस्थविरेण भुंज-[11.A. P. 1. L. 7.]न्तकेनैव उत्थाय आसनातो गन्तव्यं लब्धो पिण्डो द्वारं पश्यिय। अथ खलु संघस्थविरेण आगमेतव्यं। दीर्घोदकं दापेतव्यं। परिकथा कर्त्तव्या। दक्षिणा आदिशितव्या[7]। जानितव्यं। किमालम्बनं भक्तं। जातकं मृतकम्वा वेवाहिकम्वा[8] गृहप्रवेशकम्वा। आगन्तुकस्य गमिकस्य गृहस्थस्य प्रव्रजितस्येति। यदि ताव जातकं[9] भवति नायं दक्षिणा आदि[शि]त[11B. P. 1. L. 1.]-व्या—

अयं कुमारो शिवपथिकायच्छन्दितो
अंगुष्ठस्नेहेन यापये।
सप्तरात्रं शुनरवा शृगाला च नं लंघयन्तु
काका च अक्षिमलं हरन्ता॥

---

१. Here न seems to be a mistake.
२. Ms. भुञ्जित्वात्स्वहस्तं।
३. This sentence is not clear in the Ms
४. Ms. ॢजानेतव्यं।
५. Ms. उपश्रामन्ति।
६. Ms. उक्कट्ठिय।
७. Ms. आदिसितव्या।
८. Ms. चे वाहिकम्वा।
९. Ms. जानकं।

नायं एवं दक्षिणा आदिशितव्या ।

अथ खलु दक्षिणा आदिशितव्या—

अयं कुमारो शरणं उपेतु
बुद्धं विपश्यिश्च शिखिं च विश्वभुं ।

ककुच्छन्दं कनकमुनिश्च[1] काश्यपं
महायशं शाक्यमुनिश्च गौतमं[2] ॥

एतेहि बुद्धेहि महर्द्धिकेहि [11B. P.1. L.2.]
ये देवता सन्ति अभिप्रसन्ना ।
ता नं रक्षन्तु ता च नं पालयन्तु ॥

यथा नं इच्छति माता यथा नं इच्छति पिता ।
अतो श्रेयतरो भोतु कुमारो कुलवर्धनो ॥

एवं दक्षिणा आदिशितव्या ।

अथ दानि मृतकं भवति नायं क्षमति एवं दक्षिणा आदिशितुं—

अद्य ते सुदिवसं सुमहाबलं
भद्रकाक्षण मुहूर्त्तं प्रस्थिता ।
अद्य ते सुविहिते सुविहितेहि
दक्षिणा अग्रभाजन ग-[11B. P.1.L.3.]गताविरोचति ॥

---

१. Ms. कोनाक° ।
२. cf. Mūlasarvāstivāda-Prātimokṣa-Sūtra P. 37.

नायं एवं दक्षिणा आदिशितव्या ।

अथ खलु दक्षिणा आदिशितव्या—

सर्वसत्वा मरिष्यन्ति मरणान्तं हि जीवितं ।
यथा कर्म गमिष्यन्ति पुण्यपापफलोपगाः ॥
निरयं पापकर्माणो कृत पुण्या च स्वर्गतिं ।
आर्यमार्गम्भावयित्वा[1] परिनिर्वान्ति अनास्रवा ॥ इति ।

एवं दक्षिणा आदिशितव्या ।

अथ दानि वेवाहिकं[3] भवति ना-[11. B. P.1. L. 4.]यं दक्षिणा आदिशितव्या—

नग्ना नदी अनोदिका नग्नं राष्ट्रं अराजकं ।
इस्त्रीपि विधवा नग्ना सचेस्या दश भ्रातरो ॥[4]

---

१. Ms. अपरिमार्गम्भावयित्वा ।

२. cf. Corresponding Pali version—

सब्बे सत्ता मरिस्सन्ति मरणन्तं हि जीवितं ।
यथाकम्मं गमिस्सन्ति पुञ्ञपापफलूपगा ॥
निरयं पापकम्मिनो कतपुञ्ञा च सुग्गति ।
अरियमग्गं भावेत्वा परिनिब्बन्ति'नासवा ॥

Also, Mahāvastu, II. p 66.

३. Ms. वेदाहिकं ।

४. cf. Corresponding Pali version Jāt. A. ( Hewavitarana ed.) P. 361.

नग्गा नदी अनोदिका नग्गं रट्ठं अराजकं ।
इत्थिपि विधवा नग्गा यस्सापि दस भातरो ॥

नायं एवं दक्षिणा आदिशितव्या ।

अथ खलु दक्षिणा आदिशितव्या—

इस्त्रीपि पेशला भवतु श्राद्धा भवतु पतिव्रता नुगा[1] ।
शीलवती योगसम्पन्ना[2] सम्यग्दृष्टि च या इह[3] ॥
पुरुषो पि पेशलो भवतु श्राद्धो भवतु व्रता[II.B.P.1L.5.]नुगो ।
शीलवां त्यागसम्पन्नो सम्यग्दृष्टि च यो इह ॥

उभौ श्रद्धाय सम्पन्ना उभौ शीलेहि[4] संवृता ।
उभौ पुण्यानि कृत्वान समशीलव्रता उभौ ।
विधिना देवलोकस्तु मोदन्तु कामकामिनो[5] ॥

तामेव भार्या चरेया या[6] अस्या शीलेहि संवृता ।
असतिं परिवर्जेया मार्गं प्रतिभयं यथा ॥

एवं दक्षिणा आदिशितव्या ।

अथ दा-[11B. P.1. L. 6.]नि घरप्रवेशनिकं भवति नायं दक्षिणा आदिशितव्या—

---

१. Should either be °व्रता or °नुगा ।

२. It is भोग° in Pali.

३. Pali, सम्मादिट्ठि पुरेजवं ।

४. Ms. शीलोहि ।

५. cf. Pali–आवाह-विवाह, Chap. Saddharmaratnākara, (Bengali ed.)

मसीला समसद्धा भवन्तु उभयो सदा ।
आयुं वण्णं सुखं बलं पटिभाणं लभन्तु ते ॥

६. Ms. य ।

आदीप्तस्मिं आगारे[1] यो निहरति[2] भण्डकं।
तं खु तस्य स्वकं भवति न खलु यो तत्र दह्यति ॥

एवमादीपिते लोके मृत्युना च जरया च।
यो निहरति दानेन दिन्नं तं आहुति हुतं ॥

नायं एवं दक्षिणा आदिशितव्या।

अथ खलु दक्षिणा आदिशितव्या—

विभक्तभागं रुचिरं मनोरमं
प्रशस्तमार्येहि नवं[3] निवे-[11B. P.1. L.7.]शनं।

प्रविश्य वृद्धिये वराये भूरीये
शिरीये लक्ष्मीपरिग्रहणे च।

इमस्मिं[4] आगारे निवसन्तु देवताः।
महाभिपज्ञं न च अनुकम्पिका[5] ॥

यं विभव[6]धनधान्येन सम्भवो
भूरिमे च सायस्मिं प्रदेशे।
मेधावी वा संकल्पेति पण्डितो
शीलवान्तं ततो ज्ञेया संयता ब्रह्मचारिणा ॥

---

१. Pali अगारस्मि।
२. Ms. विहरति, Pali नीहरति।
३. Ms. प्रशस्तमार्थे जिनवे।
४. Ms. इमस्मि।
५. Ms. आनुकल्पिका।
६. Ms. परिविभव।

या तत्र देवता अस्या तासां दक्षिणामादिशेहि ।
ताये वस्त्रमालानां[१] दिवंरात्राय क-[11A. P. 2. L.1.]ल्पते[२] ॥
भोजनावस्त्रपाला च सत्कृता प्रतिमानिता ।
ग्रामे वा यदि वारण्ये निम्ने वा यदि वा स्थले[४] ॥
दिवा वा यदि वा रात्रौ देवा रक्षन्तु दायकान् ।
देवानुकम्पितो पोषो सदा भद्राणि पश्यति ॥

एवं दक्षिणा आदिशितव्या ।

अथ दानि गमिकं भक्तं भवति नायं दक्षिणा आदिशितव्या—

सर्वा दिशा सभया समाकुला
सउत्तरा सपुरस्तिमा दक्षिणा पश्चिमा च । [11A. P. 2. L.2.]
सर्वो च लोको संकुलजातो
मा प्रमज्जि जिनशासने ॥

नायं एवं दक्षिणा आदिशितव्या ।

अथ खलु "दिशा सौवस्तिका" (दक्षिणा)[५] विस्तरेण दक्षिणा आदिशितव्या । "यथापात्र प्रतिसंयुक्ते" एवं दक्षिणा आदिशितव्या ।

अथ दानि प्रव्रजितस्य भवति नायं दक्षिणा आदिशितव्या—

---

१. Ms. वस्त्र मालातां ।
२. Letters in the Ms. are not clear at all.
३. भोजना ।
४. cf. Dh. Pd. 7. 18. ( Arahanta -vagga ).
५. The bracketted word does not fit in here.

पुत्रम्वा पशुम्वा आरभ्य धनधान्यप्रियाणि वा ।
देवमावं वा मनुष्यम्वा पश्चधौ[१] [ 11A.P.2.L.3. ]मनसि प्रीयन्ति ॥

न एवं दक्षिणा आदिशितव्या ।

अथ खलु दक्षिणा आदिशितव्या—

सुदुष्करं प्रव्रजितस्य दानं पात्रेण भैक्षं अभिसाहरित्वा ।
कुलात्कुलं चरिय पिण्डपातं क्रुद्धप्रसन्नानां[२] मुखं उदीक्षिषं ।

सोयं श्रेष्ठायतने प्रतिष्ठितो पात्र संहृतौ लाभो प्रीतिं जनेहि ॥

सुविहिता, तथाहि दिन्नं इमं दानन्ति ।

एवं दक्षिणा [11A. P. 2. L.4.]आदिशिय[३] गन्तव्यं ।

एवं संघस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाश्च मनुष्याणाश्च विस्तरेण निदानं कृत्वा । संघस्य दानि बाहिरकं भक्तं । आयुष्मान्नन्दनो संघस्थविरो । उपनन्दनो द्वितीयस्थविरो । संघस्थविरो आग[11A. P. 2. L. 5.]तो । द्वितीयस्थविरो नागच्छति । दायकदानपति पृच्छन्ति । आर्य, किं समग्रो भिक्षुसंघो ? भिक्षू आहंसु[४]—नोहेति[५] दीर्घायु । को दानि नागच्छति ?

१. Letters in the Ms. are hazy.
२. Seems to be मुद्ध० ।
३. Ms. आदिशिद ।
४. Ms. आह ।
५. Ms. is indistinct.

आहंसु—द्वितीयस्थविरो नागच्छति। ते दानि ओध्यायन्ति। पश्यथ भणे, वयं पि च [1]ताव कर्मान्तां च्छोरिय आगच्छाम। समग्रं भिक्षुसंघं परि-विशिष्याम। आर्यमिश्राणाञ्च पादां वन्दिष्यामः। [11A. P.2. L 6.] द्वितीयस्थविरो नागच्छति। संघस्थविरोपि ओध्यायति। अस्माकं भगवां दण्डकर्मन्देति। द्वितीयस्थविरस्य स्वन्तिका[2]। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह। शब्दापयथ उपनन्दनं। सो दानि शब्दापितो। भगवानाह। सत्यं उपनन्दन, एवं नाम संघस्य बाहिरकं भक्तं। नन्दनो संघस्थविरो। त्वं द्वितीयस्थविरो। संघस्थविरो आगतो। भि-[11A. P. 2. L. 7.]क्षू आगताः। त्वं नागच्छसि। दायकदानपति[3] पृच्छति। आर्य, किं समग्रो भिक्षू संघो? भिक्षू आहंसु–नहि। को खलु नागच्छति? द्वितीयस्थविरो नागच्छति। ते दानि ओध्यायन्ति। वयं पि च[4] ताव कर्मान्तं च्छोरिय आगता। गच्छामः। समग्रं भिक्षुसंघं परिविशिष्यामः। आर्यमिश्राणां च पादां वन्दिष्यामः। द्वितीयस्थविरो नागच्छति। संघस्थविरोपि ओध्यायति अ-[11B. P. 2. L. 1.]स्माकं भगवान् दण्डकर्मन्देति[5]। द्वितीयस्थ-विरस्य स्वन्तिका। आह—आम भगवन्। भगवानाह—तेन हि एवं द्वितीयस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं। किन्तिदानि द्वितीयस्थविरेण भक्ताग्रे प्रपिपद्यितव्यं? एषो दानि कोचि भिक्षुसंघं भक्तेन निमन्त्रयति। संघस्थविरो

---

१. Ms. येव।

२. In some places it is मुक्तिका, cf. 11A. P3. L5.

३. Ms. दानकदानपति।

४. Ms. येव।

५. Ms. दण्डकर्म देति।

न प्रतिबलो भवति। द्वितीयस्थविरेण जानितव्यं को निमन्त्रेति। भिक्षु भिक्षुणी उपासिकोपासिका आग-[ 11.B. P. 2. L. 2. ]न्तुको गमिको वाणिजको सार्थवाहो। किन्नामको किं जातिको किं कर्मिको ते[1] मातापितरो। कतमस्मिन् देशे गृहं। कतमायां रथ्यायां। कुतो मुखं गृहस्य द्वारं। साकारं सोद्देशं पृच्छिय ततोधिवासयितव्यं। नायं अधिवासितं मयेति पात्रोल्लग्नाये[2] आसितव्यं। यदि ताव संघस्थविरो न प्रतिबलो भवति द्वितीयस्थविरेण अपरेज्जुकाये[3] वा मासचा-[ 11B. P. 2. L. 3. ]रिको वा पक्ष-चारिको वा प्रेषयितव्यो। वक्तव्यं—गच्छ, जानाहि अमुके देशे अमुकायां रथ्यायां इत्थंनामो नाम उपासको तेन भिक्षुसंघो निमन्त्रितो। जानाहि किं सिध्यति किं पच्यति। तेन प्रविशियाणं[4] तहिं पृच्छतव्यं— आरोग्यं दीर्घायू, कोचि इमं हि इत्थंनामो नाम उपासको। आह—भन्ते, किं करिष्यसि? वक्तव्यं—तेन भिक्षु सं-[ 11.B. P. 2. L. 4. ]घो भक्तेन निमन्त्रितो। किं सिध्यति वा किं पच्यति वाति? यदि तावदाह—भन्ते, किस्य उपासको? कहिं उपासकोति? नास्माकं[5] कोचि उपासको। न सिध्यति न पच्यति [त्ति] जानितव्यं—विप्रलब्धो भिक्षुसंघोति। आगच्छियाणं यदि ताव अनुग्रहो भवति अनुग्रहो साधितव्यो[6]। अनुग्रहो न भवति भक्तकानि भवन्ति भक्तका[नि] उद्दिशितव्यानि [ 11.B. P. 2. L. 5. ]।

---

१. Ms. से। Should be तस्य।
२. Ms. यत्रोल्लग्गये।
३. Ms. अपरेज्फकाये च।
४. Ms. प्रविसियाणं।
५. Ms. नामास्माकं।
६. Ms. माधितव्यो।

भक्तकानि न भवन्ति रणरणाय गरिंड आहरिणयाणं आरोचितव्यं। वक्तव्यं--आयुष्मन्तो,[१] विप्रलब्धो भिक्षुसंघो। स्वकस्वकां वृत्ति पर्येपथेति। सर्वेहि पटिपाटिकाय पिएडाय चरितव्यं।

अथ दानि आह—भन्ते, एतं सिध्यति एतं पच्यति। प्रविशन्तु आर्यमिश्राः। रणरणाय गरिंड आहरिणयाणं प्रविशितव्यं। यदि ताव हेमन्तकाली भव-[11.B. P. 2. L. 6.]ति अनुकल्लतरकं प्रविशितव्यं। लहुं कालो[२] अतिक्रमति। अथ दानि ग्रीष्मकालो भवति उष्णसन्तापेन अनुकल्लतरकं प्रविशितव्यं। अथ दानि वर्षारात्रकालो भवति देवान्तरेण प्रविशितव्यं[३]। ततो नापि क्षमति भएडं लंघयन्तेहि प्रविशितुं। अथ खलु भएडं परिवर्जयन्तेहि याव दारकदारिकां परिवर्जयन्तेहि प्रविशितव्यं। ततो न क्षमति गतागतस्य [11. B. P. 2. L. 7.] उपविशितुं। अनेकाये तहिं आसनेहि दारकदारिका वा सोवापिता भवेंसु।

अथ खलु हस्तेहि प्रत्यवेक्षियाणं अनन्तरिकाणां आसनानि वर्जयन्तेहि उपविशितव्यं। यदि ताव हेमन्तकालो भवति लघुकालो अतिक्रमति ओहेय्य ग्लानकानां पिएडपातो दापयितव्यो।

अथ दानि दायकदानपति जल्पन्ति—भन्ते, पटिपाटिकाय गृह्णथत्ति[४]। वक्तव्यं—नहीति[५] भगव-[11. A. P. 3. L. 1]तानेकपर्यायेण ग्लानो परीत्तो। किमस्माभिः विहारको शून्यको कर्त्तव्यो? लघुकालोति-

---

१. Ms. आयुष्मतो।
२. बहुं॰।
३. दिवान्त॰।
४. Ms. गृह्णयन्ति।
५. Ms. तहिं, but cf. P. 31.

क्रमति। देथ यूयंति। अथ ग्रीष्मकालो वर्षारात्रो वा भवति चिरेण कालो अतिक्रमति। ओहेय्य ग्लानकानां पटिपाटिकाये पिण्डपातो गृह्वितव्यो।

संघस्थविरो न प्रतिवलो भवति। द्वितीयस्थविरो प्रतिवलो भवति। न क्षमति द्वितीयस्थविरेण हन्तहन्ताये भुञ्जियाणं लब्धोपि-[11. A. P. 3.-L. 2.]ण्डो द्वारं[1] पश्यिय उत्थिय गन्तुं।

अथ दानि संघस्थविरो न प्रतिवलो भवति। द्वितीयस्थविरो प्रतिवलो भवति। द्वितीयस्थविरेण ओदनसम्पत्ति[2] आगमयन्तेन भुञ्जितव्यं। व्यञ्जन सम्पत्तिम्वा आगमयन्तेन भुञ्जितव्यं। यं कालं नवका भिक्षु उपग्रायन्ति[3] पानीयं वा पिबन्ति हस्तानि ओकड्ढिय आसन्ति। ततो यदि ताव संघस्थविरो न प्रतिवलो भवति। द्वितीयस्थविरेण जानित-[11. A. P. 3.-L. 3.]व्यं[4] किमारम्वणं एतं[5] भक्तं, जातकं मृतकं वेवाहिकं घरप्रवेशकं आगन्तुकस्य गमिकस्य गृहस्थस्य प्रव्रजितस्येति। यथा भवति तथा दक्षिणा आदिशितव्या। यथा प्रथमके शिक्षापदे। एवं द्वितीयस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं। तथा येव[6] दक्षिणा आदिशितव्या। पाततो[7] आगमेतव्यं[8]। एवं द्वितीयस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं। [11. A. P. 3. L. 4.] न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

---

१. Ms. पिण्डोद्धारं।
२. Ms. °सम्पत्ति।
३. Ms. उग्रायन्ति, but cf. 11A. P1. L7।
४. Ms. जानेतव्यं।
५. Ms. एवं।
६. Ms. ये च।
७. Correct reading seems, यावत्।
८. Ms. आगन्तव्यं।

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा संघस्य दानि वाहिरकं भक्तं। आयुष्मान्नन्दनो संघस्थविरो। आयुष्मान् उपनन्दनो द्वितीयस्थविरो। संघस्थविरो आगतो। द्वितीयस्थविरो आगतो। भिक्षू ओसरन्तिकाये[1] आगच्छन्ति। दायक दा-[11. A. P. 3. L. 5]नपति पृच्छन्ति[2]। आर्य, किं[3] समग्रो भिक्षुसंघो? भिक्षू आहंसु—नो हेतं दीर्घायु। को[4] दानि नागच्छति[5]? भिक्षू आहंसु—ओसरन्तिकाये आगच्छन्ति। ते दानि ओध्यायन्ति—वयमेव ताव कर्मान्तां-च्छोरय आगता। गच्छामः, समग्रं भिक्षुसंघं परिविशिष्यामः। आर्यमिश्राणां च पादां वन्दिष्यामन्ति। इमेपि आर्यमिश्रा ओसरन्तिकाये आगच्छन्ति। संघस्थ-[11. A. P. 3. L. 6]विरो च द्वितीयस्थविरो च ओध्यायन्ति। अस्माकं भगवान् दण्डकर्मन्देति। इमेपां मुक्तिका[6]। एतं प्रकरणं भिक्षु भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ भिक्षून्। ते दानि शब्दा-पिताः। भगवानाह—सत्यं भिक्षवो, एवं नाम संघस्थविरस्य वाहिरकं भक्तं। नन्दनो संघस्थविरो। उपनन्दनो द्वितीयस्थविरो आगतो। यूयं ओसरन्ति-काये आगच्छथ। दायक [11. A. P. 3. L. 7] दानपति पृच्छन्ति—आर्य, किं समग्रो भिक्षुसंघोन्ति। भिक्षू आहंसु—नोहीदं दीर्घायू। को दानि नागच्छति? भिक्षू ओसरन्तिकाये आगच्छन्ति। ते दानि ओध्यायन्ति। वयमेव कर्मान्ताच्छोरिय आगता। गच्छाम। समग्रं भिक्षुसंघं परिविशिष्या-मन्ति, आर्यमिश्राणाञ्च पादाम्वन्दिष्यामन्ति। इमेपि आर्यमिश्रा

१. Ms. ओसवन्ति°; cf. Subsequent line in the same page.
२. Ms. प्रतिपृच्छन्ति।
३. Ms. के।
४. Ms. दीर्घायुको।
५. Ms. न गच्छति।
६. Ms, मोक्तिका, Mostly this word is written as सोन्तिका।

ओसरन्तिकाये आगच्छन्ति। संघस्थविरो च द्वितीयस्थविरो च ओध्या-[11. B. P. 3. L. 1]यन्ति—अस्माकं भगवान्दण्डकर्मन्देति। इमेषां मुक्तिका[1]। आहंसु--आम भगवन्भगवानाह—तेन हि सर्वेहि एवं भक्ताग्रे प्रतिपद्यितव्यं। किन्तिदानि एवं सर्वेहि भक्ताग्रे प्रतिपद्यितव्यं? एषो दानि कोचि संघं भक्तेन[2] निमन्त्रेति। संघस्थविरो न प्रतिबलो भवति। द्वितीयस्थविरो न प्रतिबलो भवति। यो तत्र प्रतिबलो भवति तेन जानितव्यं--कोयं नि-[11. B. P. 3. L. 2]मन्त्रेति[3]। भिक्षु भिक्षुणी उपासक-उपासिका गृहस्थो प्रव्रजितो वाणिजको सार्थवाहो आगन्तुको गमिको। नापि क्षमति गतागतस्य अधिवासितुं। अथ खलु पृच्छितव्यं, किन्नामकोसि? किं गोत्र-कोसि? किं कर्मिका ते मातापितरौ? कतमे देशे गृहं? कुतो मुखं? कतमाये रथ्याये[4] कुतो मुखं गृहस्य द्वारं? साकारं सोद्देशं पृच्छियाणं ततोधिवासितव्यं। नापि दा-[11. B. P. 3. L. 3]नि क्षमति अधिवासितं मयेति पात्रोल्लग्निकाये[5] आसितुं। अथ खलु यदि ताव संघस्थविरो न प्रतिबलो भवति। द्वितीयस्थविरो न प्रतिबलो भवति। यो प्रतिबलस्तेन प्रकृत्येव मासचारिको वा पक्षचारिको वा प्रेषयितव्यो। अनकाये तहिं जातकं मृतकम्वा भवेय। राजभयम्वा चोरभयम्वा ढोस्सभयम्वा वातपुत्रभयम्वा। विहेठना-[11. B. P. 3. L. 4.]भिप्राया निमन्त्रयेंसु। तेन गच्छियाण तहिं गृहं पृच्छितव्यं-- कोचि इमं[6] हि एवन्नामको[7] उपासको, दानपती वा वाणिजका

---

१. Ms. सोन्तिका।
२. Ms. भक्त।
३. Ms. निमन्त्रति।
४. Ms. कतमा येव ध्याये।
५. Ms. तत्रो, after which three letters are missing, but the probable word is adopted by us.
६. Ms. इमहि।
७. Ms. यवन्नामको।

वाति। किम्वा एतत्ति ? वक्तव्यं--भिक्षुसंघो तेन भक्तेन निमन्त्रितो। यदि ताव आहंसु–नास्ति कोचि इमं हि एवं नामको। किस्य[१] उपासको ? कस्य भक्तं ? कथं भक्तंति ? जानितव्यं--विप्रलब्धो भिक्षुसंघोत्ति[२]। ततो आगच्छिय यदि ताव [11. B. P. 3. L. 5] अनुग्रहो भवति साधयितव्यो। अनुग्रहो न भवति भक्तकानि भवन्ति भक्तकानि उद्दिशितव्यानि। अथ दानि भक्तकानि न भवन्ति रणरणाय गणिंड आहणिय याव सर्वेहि पटिपाटिकाय पात्राणि गृह्णिय प्रविशितव्यं पिण्डपातं। अथ दानि ते जल्पन्ति भन्ते, एतं सिध्यति एतं पच्यति। यावत्पात्राणि गृह्णिय प्रविशितव्यं। यदि ताव हेमन्तकालो भवति अ-[11. B. P. 3. L. 6]नुकल्लं[३] प्रविशितव्यं। लघुं कालो अतिक्रामति। अथ दानि ग्रीष्मकालो भवति शीतलक संगेन[४] प्रविशितव्यं। वर्षारात्रो भवति देवान्तरेण अनुकल्लं प्रविशितव्यं। ततो न क्षमति भण्डं वा लंघयंतेन प्रविशितुं। भाजनम्वा लंघयन्तेहि प्रविशितुं। दारकदारिका लंघयन्तेहि प्रविशितुं। अथ खलु भण्डं परिहरन्तेहि दारकदारिकां परिहरन्तेहि[५] प्रविशितव्यं। त-[11.B.P.3. L. 7]-तो नापि क्षमति प्रविष्टेहि गतागतस्य उपविशितुं। अनेकाये तहिं आसनेहि गर्भरूपा सोवापितानि भवेंसु। भाजनकानि वा थपितकानि वा भवेंसुः। अथ खलु हस्तेन प्रत्यवेक्षियाण आनन्तरियाणां आसनानि वर्जयन्तेहि यथावृद्धिकाये[६] उपविशितव्यं। ततो यदि ताव हेमन्तकालो भवति

१. Ms. किः स; But to derive a proper meaning this should have been को सो।

२. Ms. °संघोस्ति।

३. Ms. अनु कल्पं।

४. Ms. उष्णं शंकेन।

५. It seems परिहार° But in P. 26 it is परिवर्जय°।

६. Ms. °वृद्ध° ( It seems to be a proper term, but in many books of Bsk. this term of the Ms. also accepted, viz. Gms. Vol. III. Pt. 3. P. 9. )

लघुकालो अतिक्रमति ओहेय्य[1] ग्ला[न]कानां पिण्डपातो दापयितव्तो[2]। अ-[11. A. P. 4. L. 1]थ दानि दायकदानपति जल्पन्ति--भन्ते, ओहेय्य ग्लानकानां पटिपाटिकाये[3] पिण्डपातं गृह्णथेति। वक्तव्यं--नहीति। लघुकालो अतिक्रमति। भगवता च अनेकपर्यायेण ग्लानो परिन्दितो[4]। किं अ[म्भे]हि शक्यम्विहारको शून्यको कर्त्तुन्ति ? अथ दानि ग्रीष्मो वा वर्षारात्रो वा कालो भवति। न लहुकालो अतिक्रमति। ओहेय्य ग्लानकानां पटिपाटिकाये पिण्डपातो गृह्णितव्यं[5] नापि क्षमति ल-[11. A. P. 4. L. 2]-ब्धालब्धं[6] हन्तहन्ताये भुञ्जिय लब्धपिण्डो[वा]द्वारं पश्यिय उत्थिय गन्तुं। अथ खलु यदि ताव संघस्थविरो न प्रतिबलो भवति। द्वितीयस्थविरो न प्रतिबलो भवति। यो तत्र प्रतिबलो भवति तेन ओदनसम्पत्ती वा आगमेतव्यं। व्यञ्जनसंपत्ती वा आगमंतेन भुञ्जितव्यं। तेन दक्षिणा आदिशितव्या। जानितव्यं, किमालम्बनं एतं भक्तं--जातकं [वा] मृतकं [वा] [वेवाहि]कं वा घरप्र-[11. A. P. 4. L. 3]वेशिकं वा आगन्तुकस्य [वा] गमिकस्य [वा] गृहस्थस्य [वा] प्रव्रजितस्येति।

ततो यदि ताव जातकं भवति नायं दक्षिणा आदिशितव्या--

---

१. Ms. ओहेस्य।

२. But in Ms. 5 or 6 letters are not clear enough.

३. Ms. °कायो।

४. Elsewhere mostly it is परित्तो; but DBHS. mentions this word also.

५. Ms. is very clumsy here, and this word is restored in comparison with other readings in the book. vide: ante, 11A. P. 1. Ll. 3 & 4.

६. Upto this word letters do not give clear readings, cf. Ibid.

अयं कुमारो शिवपथिकायच्छन्दितो[१] अङ्गुष्ठस्नेहेन यापये[२] ।
सप्तरात्रं शुनखा शृगाला च[३] नं लंघयन्तुं[४] ।
काका च[५] अक्षिमलं हरन्ताति ॥

नायं एवं दक्षिणा आदिशितव्या ।

अथ खलु दक्षिणा आदिशितव्या--

अयं कुमारो शरणं उपेतु [11. A. P. 4. L. 4]
बुद्धं विपश्यिश्च शिखिश्च विश्वभुं[६] ।
क्रकुच्छन्दं[७] कोनाकमुनिश्च काश्यपं
महायशं[८] शाक्यमुनिं च गौतमं[९] ॥

एतेहि बुद्धेहि महर्द्धिकेहि ये देवता सन्ति अभिप्रसन्नाः ।
ता [च] नं रक्षन्तु [ता च नं पालयन्तु ॥ ]

यथा [नं] इच्छंति माता यथा [नं] इच्छति पिता[१०] ।
अतो श्रेयतरो भवतु[११] कुमारो कुलवर्धनो ॥

---

१. Ms. कुमारो सिवयसिकाच्छोतो, but cf. 11B. P1. L1 i.c. p. 19.
२. Ms. यापयति Ibid.
३. Ms. शृगाचे° Ibid.
४. Ms. लंघयन्तं ,, .
५. Ms. च से ,, .
६. Ms. विश्वभुव ,, .
७. Ms. क्रकुच्छन्दो, also, °त्सन्दः cf. Pr. S. Mūl. 37.
८. Ms. महामुनिं ।
९. Ms. गोतमं cf. Pr. S. Mūl. P. 37. No. 11.
१०. Ms. पिता Preceding to माता and पिता there are से instead of नं cf. Ibid.
११. Ms. भवंतु, but elsewhere it is भोतु cf. 11B. P1. L1. p. 18.

एवं दक्षिणा आदिशितव्या। तथा येव दक्षिणायो[1] विस्तरेण कर्त्तव्यायो[2] यथा [11. A. P. 4. L. 5] संघस्थविरस्य भक्ताग्रे। एवं सर्वेहि भक्ताग्रे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकां[3] धर्मां अतिक्रामति ॥३॥

भगवान् श्रावस्त्यांविहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ते दानि आयुष्मन्तो नन्दनोपनन्दना षड्वर्गिकाश्च उपसंपादेन्ति। ते दानि उपसंपादिय न ओवदन्ति। न अनुशासन्ति। ते दानि इन्द्र[11. A. P. 4. L. 6]गवा विय वर्द्धयन्ति। शिवच्छुगल विय[4] वर्तंति[5] अनाकल्पसम्पन्नाः अनीर्यापथसम्पन्नाः। न जानन्ति कथमुपाध्याये प्रतिपद्यितव्यं। कथमाचार्ये प्रतिपद्यितव्यं। कथं वृद्धतरके प्रतिपद्यितव्यं। कथं संघमध्ये प्रतिपद्यितव्यं। कथं ग्रामे प्रतिपत्तव्यं। कथं अरण्ये प्रतिपत्तव्यं[6]। कथं निवासयितव्यं। कथं प्रावरितव्यं। कथं संघाटीपात्रचीवरधारणे प्रतिपद्यितव्यं। [11. A. P. 4. L. 7] एतं प्रकरणं भिक्षू[7] भगवतो आरोचयेंसु। भगवानाह––शब्दापयथ नन्दनोपनन्दनां षड्वर्गिकांश्च। ते दानि शब्दापिता। भगवानाह––एवं नाम यूयं उपसंपादेथ। उपसंपादिय न ओवदथ न अनुशासयथत्ति। तदेवं सर्वं भगवान् विस्तरेण प्रत्यारोचयति। याव

१. Ms. दक्षिणा यो।
२. Ms. कर्त्तव्या यो।
३. Ms. असिमाचारिदां।
४. Ms, °गलद्विय।
५. Ms. वर्तति।
६. Both प्रतिपद्यितव्यं and प्रतिपत्तव्यं are used without any discrimination throughout the book.
७. Ms. भिक्षु।

कथं संघाटीपात्रचीवरधारणे प्रतिपद्यितव्यं । आहंसु--आम भगवन् । भगवानाह--एवं [11. B. P. 4. L. 1] दाणि यूयं उपसंपादिय नैवाववदथ[१] नानुशासथ । तेन हि एवं साद्धेंविहारिस्मिं[२] प्रतिपद्यितव्यं । किन्तिदानि उपाध्यायेन साद्धेंविहारिस्मिं[३] प्रतिपद्यितव्यं । उपाध्यायेन ताव साद्धेंविहारिं[४] उपसंपादेन्तकेनैव उभयतो विनयो ग्राहयितव्यो । उभयतो विनयं न पारयति एकतो विनयो ग्राहयितव्यो । एकतो विनयं न पारयति पञ्चसूत्राणि विस्त-[11. B. P. 4. L. 2]रेण ग्राहयितव्यो । पञ्चसूत्राणि न पारयति चत्वारि वा त्रीणि, दुवे, एकं सूत्रं विस्तरेण ग्राहयितव्यो । एकं सूत्रं न पारेति त्रिंशतियो[५] ग्राहयितव्यो । शिष्टकं अभीक्ष्ण [श्रुति]कायो गाथायो च । त्रिंशतियो[५] न पारेति द्वे अनियतां ग्राहयितव्यो । शिष्टकं अभीक्ष्णश्रुतिकायो गाथायो च । द्वे अनियता न पारेन्ति अन्तमसतो चत्वारि पाराजिकां ग्राहयितव्यो । शिष्टकं अभीक्ष्ण श्रुतिकायो गा-[11. B. P. 4. L. 3.]थायो च । शेखयितव्यो[५] अनुशासयितव्यो—काल्यं मध्यन्तिकं सायं । सायं अभि-धर्मेण वा अभिविनयेन वा । अभिधर्मो नाम नवविधो सूत्रान्तो । सूत्रं, गेयं, व्याकरणं, गाथा, उदानं, इतिवृत्तकं, जातकं, वैपुल्याद्भुताधर्मा । अभिविनयो नाम प्रातिमोक्षो संक्षिप्तविस्तरप्रभेदेन ।

अथ दानि न प्रतिबलो भवति उद्दिशितुं आपत्तिकौशल्यं शि-[11. B. P. 4. L. 4.]क्षितव्यो । सूत्रकौशल्यं, स्कन्धकौशल्यं, आयतन-

---

१. Ms. नैवो॰ ।

२. Ms. श्राद्धविहारस्मिं ।

३. Ms. श्राद्धे विहारेस्मि ।

४. Ms. श्राद्धेविहारि ।

५. Ms. त्रिशतोपि, but cf. p. 40.

कौशल्यं,[१] प्रतीत्यसमुत्पादकौशल्यं, स्थानास्थानकौशल्यं। आचारं शेखयितव्यो। अनाचारतो वारयितव्यो[२]। अथ दानि ओवदति। सो एव तस्य ओवादो। एवं स्वाध्यायति। अरण्ये प्रतिवसति। प्रहाणे उपविशति सो एवास्य ओवादो। उपाध्यायो सार्द्धेविहारिं[३] उपसंपादिय न ओव-[11. B. P. 4. L. 5]दति। न अनुशासति। न स्वाध्यायति। न अरण्ये वसति। न प्रहाणे उपविशति। अन्तमसतो वक्तव्यो-- अप्रमादेन संपादेहीति। न ओवदति विनयाति[क्र]मं आसादयति। एवमुपाध्यायेन सार्द्धेविहारिस्मि[४] प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान् धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवा-[11. B. P. 6.]नाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ते दानि भिक्षू उपसंपादेन्ति। ते दानि उपसंपादिताः उपाध्यायस्य न अल्लीयंति[५]। ते दानि भिक्षू ओध्यायन्ति। अस्माकं भगवान्दण्डकर्मन्देति। इमेषां मुक्तिका। कथं अम्भेहि ओवदितव्याः[६] अनुशासितव्याः? ये इमे अस्माकं न अवल्लीयंति न प्रत्यालीयंति। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। [11. B. P. 4. L. 7.] भगवानाह[७]-- [ते]न हि एवं सार्धेविहारिणा उपाध्याये प्रतिपद्यितव्यं। किन्तिदानि एवं सार्धेविहारिणा उपाध्याये प्रतिपद्यितव्यं? सार्धेविहारिणा तावत्[८] कल्यत एव

---

१. Sometimes it is कौशलं, cf. Upasampadājñaptih, P. 26 by B. Jinananda.

२. Ms. चारयितव्यो।

३. Ms. श्रद्धेविहारि।

४. Ms. श्रद्धे°।

५. Ms. Seems अल्लिम्यंति, but letters are not clear here.

६. Ms. ओववदितव्या।

७. Six letters are illegible.

८. Ms. नाव।

उत्थंतेन उपाध्यायस्य विहारस्य द्वारं आकोटयितव्यं[१]। यं कालं अभ्यनुज्ञा[२] दिन्ना भवति ततो द्वारं सुखाकं अपदुरियाण ततो प्रथमं[३] दक्षिणो पादो प्रवेशितव्यो। पश्चा[द्]वामो [पादो]प्रवेशय[४] वन्दित्वा सुखशयितं पृच्छितव्यो। उ-[11. A. P. 5. L. I.]द्दिशित्वा प्रतिपृच्छित्वा खे[ट]कटाहको निकालयितव्यो। प्रस्रावकुम्भिका निकालयितव्या। पीठिका प्रज्ञपयितव्या। हेमन्तकालो भवति मन्दमुखि प्रज्वालयितव्या। मुखोदकं दापयितव्यं। दन्तकाष्ठं धोविय उपनामयितव्यं। मुखोदकमासिञ्चितव्यं। हस्तां निर्मादिय हस्तनिर्मादनं दातव्यं। पेया उक्कढितव्या[५]। पेया पेयिता[६] पेय[पा]त्रं शोधितव्यं। शोधित्वा[७] भक्तुद्देशातो[८] [11. A. P. 5. L. 2]भक्तकं ग्राहेतव्यं। भक्तविसर्गो कर्तव्यो। पात्रं निर्मादयितव्यं[९]। पात्रं प्रतिशामयितव्यं। गोचरं प्रविशन्तस्य ग्रामप्रवेशनिकानि चीवराणि उपनामयितव्यानि। विहार[१०] चरणकानि चीवराणि प्रतिशामयितव्यानि। आत्मनो चीवरकं गृह्णीय पृष्ठतोनुगन्तव्यं। नापि दानि खुराखुरं[११]। अथ खलु नात्यासन्ने

---

१. Ms. आस्फोट, cf. 11A. P6. L5.

२. Letters are not clear, but cf. Ibid.

३. Ms. प्रथम।

४. Ms. प्रविशय।

५. Ms. उच्छटितव्या, should be उपनामयितव्या।

६. Ms. पेयिंता।

७. Ms. शो···and 3 or 4 letters are not clear enough, but restored from other readings.

८. Ms. not legible, but seems भक्तद्देशातो।

९. Ms. निर्म्मायियितव्यं।

१०. Ms. विहार।

११. cf. B. H. S. D.

नातिदूरे। तेन दानि गोचरातो निर्गतस्य उपाध्यायस्य चीवराणि प्रस्फो-[11. A. P. 5. L. 3.]टिय साहरिय[1] प्रतिसामयितव्यानि। आत्मनो स्कन्धे दापिय[2] शीर्षं ओनामिय पुरतो गन्तव्यं। विहारं आगच्छियाण पीठिका प्रज्ञापयितव्या। ग्रामप्रवेशनिकानि चीवराणि एकान्ते स्थपेतव्यानि। विहार-चरणकाणि चीवराणि उपनामयितव्यानि। पादोदकं उपनामयितव्यं। पाद-तट्टकं[3] उपनामयितव्यं। पादा धोवयितव्या। उष्णं भवति स्नापेतव्यौ [11. A. P. 5. L. 4.] शीतं भवति मन्दमुखी प्रज्वालयितव्या।

यदि पिण्डचारो अण्ठितो[4] भवति उपनामयितव्यो। नानाना-वर्णितं भवति पृच्छितव्यो--सुविहित, कुतो इदं लब्धं ? असुकातो वेशिक-कुलातो[5] वडं[6] विधवाये स्थूलकुमारीये पण्डकस्य, असुकाये भिक्षुणीये, उरुशंकियपरिशङ्कियाणि कुलानि व्यापदिशति वारेतव्यो। वक्तव्यो[7]--मा तहिं गच्छ। अथ दानाह--असु-[11. A. P. 5. L. 5]केस्मिं कुले बुद्धवचनं जल्पितं। ततो लब्धं। वक्तव्यं-- कारेहि धूमं मा च पुनो[8] आमिषचक्षु देशेसि। हस्तान्निर्मादिय हस्तनिर्मादनं दातव्यं। पिण्डपातो उकढितव्यो। पिण्डपातं उपनामयितव्यो। भुञ्जन्तस्य पानीयं चारितव्यं। वीजनवातो दातव्यो। भक्तविसर्गो कर्त्तव्यो। भुक्ताविस्य पात्रं अपकर्पि-तव्यं। अपका च भाजनं भक्तोपधानं श-[11. A. P. 5. L. 6.]य्यासनं

१. Pali संहरिय, but mostly संहरित्वा।
२. Probably ठपिय but Ms. दापेयं।
३. Pali–°कठलिकं, possibly here it is °काष्ठकं।
४. Ms. letters do not render clear reading here.
५. Ms. विशिक°।
६. cf. DBHS.
७. Ms. वकुच्यो।
८. Ms. पूनो।

प्रतिसामेतव्यं। चीवराणि[1] पात्रं शोधेतव्यं। पात्रं प्रतिसामेतव्यं। विहारको सिञ्चितव्यो। सन्मार्जितव्यो। कालेनकालं गोमयकार्षी दातव्या। शय्यासनं प्रस्फोटयितव्यं। चीवराणि धोवितव्यानि[2] सिञ्चितव्यानि रंजितव्यानि। पात्रं दहितव्यं[3] रञ्जितव्यं। दिवाविहारं गच्छन्तस्य पीठिका नयितव्या। निषीदनं नयितव्यं। पुस्तको नयितव्यो। कुण्डिका नयितव्या। उद्देशं [11A. P. 5. L. 7.] गृह्णिय एकमन्ते स्वाध्यायन्तेन[4] आसितव्यं। अथ दानि दिवाविहारं गन्तुकामो भवति आपृच्छि[य] आगन्तव्यं। यदि दानि केनचि सह स्वाध्यायतुकामो भवति आपृच्छितव्यं। वक्तव्यं--करोमि अमुकेन सह स्वाध्यायन्ति। तेन दानि जानितव्यं--यदि सो भवति शैथिलको वा बाहुलिको वा आवट्टको वा अशिक्षाकामो[5] [वा] वक्तव्यं--मात्रयो[6] उत्पद्येथ[7]। अथ दानि भद्रको भव-[11. B. P. 5. L. 1.]ति गुणवां शिक्षाकामो वक्तव्यं—करोहि। दिवाविहारतो आगच्छन्तस्य पीठिका आनयितव्या। निषीदनं आनयितव्यं। पुस्तको आनयितव्यो। कुण्डिका आनयितव्या। आगतस्य समानस्य हस्तनिर्मादनं दातव्यं। पुष्पाणि दातव्यानि। चेतियं वन्दन्तस्य पृष्ठतोनुगन्तव्यं। पीठिका प्रज्ञापयितव्या। हेमन्तकालो भवति मन्दमुखी प्रज्वालयितव्या। पादा धोवयितव्या। पादा म्रक्षेतव्या। शय्या प्रज्ञापयित-[11. B. P. 5. L. 2.]व्या। यदि महाजनिको भवति अन्तमसतो हस्तेन समवधानं धातव्यं[8]। दीपो प्रज्वालयितव्यो। खेटकटाहकं

१. It seems irrelevent here.
२. Ms. धौवि°।
३. Ms. देहि°।
४. Ms. स्वाध्याय तेन।
५. Ms. असि°।
६. Ms. माश्रयो।
७. उत्पद्येया।
८. दातव्यं!

उपनामयितव्यं। प्रस्रावकुम्भमुपनामयितव्यं । सुखं[१] प्रतिक्रमापयितव्यं। उद्दिशित्वा वा परिपृच्छित्वा वा। यदि विहारो प्रापुणति आपृच्छितव्यं—अमुकं विहारं गृह्णामि। अथ दानि द्वितीयेन सह प्रापुणति विहारं उपाध्यायेन जानितव्यं। यदि सो भवति शैथिलको [11. B. P. 5. L. 3] वा वाहुलिको वा आवट्टको वा [अ] शिक्षाकामो [वा] वक्तव्यं--मा गृह्ण। संसर्गदोषो भविष्यतीति। अथ दानि भवति भद्रको गुणवान् शिक्षाकामो वक्तव्यो—गृह्ण यावन्न उत्थापीयति। सा एव मे आपृच्छनिका।

अथ दानि उत्थापीयति यत्तिकां वारां आपृच्छितव्यं। यदि दानि तहिं केनचित्सह स्वाध्यायतुकामो भवति आपृच्छितव्यं—करोमि अमुकेन सार्धं स्वाध्या-[11. B. P. 5. L. 4]यं। उपाध्यायेन जानितव्यं। एवं सार्द्धेविहारिणा[२] उपाध्याये प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥२॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ते दानि आयुष्मन्तो नन्दनोपनन्दनो षड्वर्गिका च निश्रयं ददिय[३] नैव अन्तेवासि[कां] ओवदन्ति न अनुशासन्ति। ते दानि इन्द्रगवा विय वर्धन्ति[४]। [11. B. P. 5. L. 5] शिवच्छगला विय वर्तन्ति[५] अनाकल्पसम्पन्नाः अनीर्यापथसम्पन्नाः[६]। न जानन्ति कथमुपाध्याये प्रतिपद्यितव्यं। कथं आचार्ये प्रतिपद्यितव्यं। कथं वृद्धतरकेषु प्रतिपद्यितव्यं।

१. Ms. मुखं।
२. Ms. श्रद्धे ।
३. Ms. यपेय। But cf. 11B. P5. L7.
४. Also वर्धयन्ति, cf 11A. P4. L6.
५. Ms. वर्धन्ति, but cf. Ibid.
६. Ms. अनीर्यापय°।

कथं संघमध्ये प्रतिपद्यितव्यं। कथं ग्रामे प्रतिपद्यितव्यं। कथं अरण्ये प्रतिपद्यितव्यं। कथं निवासितव्यं। कथं प्रावरितव्यं। कथं संघाटीपात्रचीवरधारणे प्रतिपद्यितव्यं। [11. B. P. 5. L. 6]।

एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह--शब्दापयथ नन्दनोपनन्दनां षड्गिंकानां च। ते दानि शब्दापिता। भगवानाह--सत्यं भिक्षवो, नन्दनोपनन्दना षड्वर्गिकाश्च एवन्नाम यूयं निश्रयं देथ। निश्रयं ददियाण अन्तेवासिकां न ओवदथ नानुशासथ। तदेव सर्वं भगवान् विस्तरेण प्रत्यारोचयति। यात्र कथं संघाटीपात्रचीवरधारणे प्रतिपद्यितव्यं। आहं-[11. B. P. 5. L. 7]सु--आम भगवन्। भगवानाह--एवं च यूयं निश्रयं[1] ददियं अन्तेवासिकां नैव ओवदथ नानुशासथ। तेन हि एवं आचार्येण अन्तेवासिकस्मिं प्रतिपद्यितव्यं। किन्तिदानि आचार्येण अन्तेवासिकस्मि प्रतिपद्यितव्यं? आचार्येण तात्र निश्रयं देन्तेन अन्तेवासिं उभयतो विनयं ग्राहयितव्यो। उभयतोपि विनयं न पारेति। एकतो विनयतो ग्राहयितव्यो। एकतो विनयं न पारे-[11. A. P.6. L. 1]ति[2] पञ्चसूत्राणि विस्तरेण ग्राहयितव्यो। पञ्चसूत्राणि न पारेति चत्वारि, त्रीणि, द्वे, एकं सूत्रं विस्तरेण ग्राहयितव्यो। एकं सूत्रं न पारेति द्वानवतीयो ग्राहयितव्यो। द्वानवतीयो न शक्नोति त्रिंशतियो ग्राहयितव्यो। [त्रिंशतियो न पारेति द्वे अनियता ग्राहयितव्यो[3]।]शिष्टकं अभीक्ष्ण श्रुतिकायो गथायो च। द्वे अनियता न पारेति अन्त[11. A. P. 6. L. 2]मसतो चत्वारि पाराजिकां ग्राहयितव्यो। शिष्टकं अभीक्ष्ण श्रुतिकायो गाथायो च। शेखयितव्यो धातुकौशल्यं

१. Ms. निश्चयं।
२. Ms. पारिति।
३. See p. 24.

स्कन्धकौशल्यं आयतनकौशल्यं प्रतीत्यसमुत्पादकौशल्यं । आचारं शेखयितव्यो । अनाचारतो वारयितव्यो[1] । एषो आचार्यो निश्रयं ददिय[2] अन्तेवासि नैव ओवदति नानुशासति विनयातिक्रममासादयति । एवमाचार्येण अन्तेवासिस्मिं प्रतिप-[11. A. P. 6. L. 3. ]द्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान् धर्मानातिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ये दानि भिक्षू निश्रयन्देति ते अन्तेवासिका आचार्यस्य[3] निश्रयं गृह्णीय नैव अल्लीयन्ति न प्रत्यल्लीयन्ति । ते दानि भिक्षू ओध्यायन्ति । अस्माकं भगवां दण्डकर्मन्देति ।॰ इमेषां मुक्तिका तेया[4]-[11. A. P. 6. L. 4. ]दानिं अस्माकं [नैव] अल्लीयन्ति न प्रत्यल्लीयन्ति । कथं[5] इमे अम्भेहि ओवदितव्याः । अनुशासितव्याः ।

एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु । भगवानाह––शब्दापयथ भिक्षून् । ते दानि शब्दपिताः । भगवानाह—तेन हि एवं अन्तेवासिना आचार्ये प्रतिपद्यितव्यं ।

अन्तेवासिना तात्र कल्यतो येव उत्थंतेन[6] एवं आचार्यस्य विहारस्य द्वा-[11. A. P. 6. L. 5. ]रं आकोय्यितव्यं । यं कालं अभ्यनुज्ञा दिन्ना भवति द्वारं सुखाकं अपदुरियाणं प्रथमं दक्षिणो पादो प्रवेशयितव्यो । पश्चाद्वामं पादं प्रवेशयाण आयार्यस्य सुखरात्रिं पृच्छितव्या । खेटकटाहं

---

१. Ms. धारयितव्यो ।
२. Ms. ददेय ।
३. Ms. आचारिकस्य ।
४. Ms. या ।
५. Ms. कथ ।
६. Ms. उत्थट्ठकेन ।

निष्काशयितव्या। यावत्पादोदकं दापयितव्यं पादोदक उपनामयितव्यं पादतट्ठकं[१] उपनादयितव्यं। पादा धोवयितव्या पादा म्रत्त-[11. A. P.-6. L. 6.]यितव्या। खेटकटाहकं प्रवेशयितव्यं प्रस्रावकुम्भिका प्रवेशयितव्या। दीपको प्रज्वालयितव्यो। शय्या प्रज्ञपयितव्या। एवं अपरं दिवसं प्रस्रावकुम्भिका निष्काशयितव्या। तदेव सर्वं नवकपरिचर्या कर्तव्या। विस्तरेण यथा सार्धेविहारिस्य[२] याव दीपं आदीपिय शय्यां प्रज्ञपिय सुखं प्रतिक्रामयितव्यो। एवं अन्तेवासिना आचार्ये प्रतिपद्यित-[11. A. P. 6. L. 7.]व्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

## — उद्दानं —

एवं संघस्थविरेण पोपधे प्रतिपद्यितव्यं।
एवं द्वितीयस्थविरेण पोपधे प्रतिपद्यितव्यं।
एवं सर्वेहि पोपधे प्रतिपद्यितव्यं।
एवं संघस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं।
एवं द्वितीयस्थविरेण भक्ताग्रे प्रतिपद्यितव्यं।
एवं सर्वेहि भक्ताग्रे प्रतिपद्यितव्यं।
एवं उपाध्याये-[11. B. P. 6. L. I.]न
सार्धेविहारिस्मि[३] प्रतिपद्यितव्यं।

---

१. cf. 11A. P5. L3; p. 37.
२. अद्दे विहारिस्य।
३. अद्दे विहारिस्मि।

एवं सार्धेविहारिणा[1] उपाध्याये प्रतिपद्यितव्यं ।
एवं आचार्येण अन्तेवासिस्मिं प्रतिपद्यितव्यं ।
एवं अन्तेवासिना आचार्ये प्रतिपद्यितव्यं ॥३॥

[ ॥ प्रथमो वर्गः ॥ ]

१. श्रद्धे विहारिणा ।

## [ द्वितीयो वर्गः ]

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा पञ्चार्थवशां[1] संपश्यमानस्तथागता अर्हन्तः सम्यक् सम्बुद्धाः पञ्चाहिकां विहा-[11. B. P. 6. L. 1.]र चारिकामनुचंक्रमन्ति[2] अनुविरचरन्ति। कतमां पञ्च ? कच्चिमे[3] श्रावकाः न कर्मारामा न कर्मरताः न कर्मारामतानुयोगमनुयुक्ता विहरन्ति। न भाष्यारामाः न भाष्य-रताः न भाष्यारामतानुयोगमनुयुक्ता[4] विहरन्ति। न निद्रारामाः न निद्रारताः न निद्रारामतानुयोगमनुयुक्ता विहरन्ति। ग्लानकानां च भिक्षूणां अनु-कम्पार्थं। ये ते [11. B. P. 6. L. 3.] श्राद्धाः कुलपुत्राः[5] [तथागतमेवो-दिश्य][6] श्रद्धयादागारादनगारिकां प्रव्रजिताः। ते च तथागतं दृष्ट्वा अतीव उदाराणि प्रीतिप्रामोद्यानि[7] प्रतिलभिष्यन्ति। इमां [ प ] ञ्चार्थवशान् संपश्यमानास्तथागता अर्हन्तः सम्यक्संबुद्धाः पंचाहिकां विहारचारिकामनुचंक्र-मन्ति अनुविचरन्ति।

अद्राक्षीद्भगवां पञ्चाहिकां विहारचारिकामनुचंक्रमन्तो अनुवि-[11. B. P. 6. L. 4.]चरन्तो शय्यासनं उज्भित[8]प्रकीर्णं उत्पादकं

---

१. Ms. पञ्चान्ववशां।
२. Ms. °मनुसंक्रमन्ति।
३. Ms. कच्चिमे।
४. Ms. °रामातामुत्योग°।
५. Ms. श्रीद्धार कुलापत्रा।
६. Not in the Ms. but cf. 11A. P7. L6; p. 47.
७. Six letters in the last two words are not legible.
८. Ms. प्रणित, but these three letters do not give clear reading.

उत्थितकं वातातपेन विनाशियन्तं। वर्षेण ओवर्षियन्तं प्राणकेहि खज्जन्तं पक्षीहि ओहपियन्तं ओमयिलमयिलं पाटितविपाटितं। आतपे दिन्नं।

भगवां जानन्तोप्येव भिक्षू[1] पृच्छति। कस्येमं भिक्षवो, शय्यासनं उज्झितप्रकीर्णं ॥ पेयालं ॥ याव ओमयिलमयिलं पाटितविपाटितं। आतपे दिन्नं? आहंसु—एतं [11. B. P. 6. 5.]भगवं[2]; सांघिकं। भगवानाह—एवं च यूयं अप्रत्यास्तरणका शय्यासनं परिभुंजथ। तेन हि एवं शय्यासने प्रतिपद्यितव्यं। किन्तिदानि [ एवं ] शय्यासने प्रतिपद्यितव्यं? न दानि क्षमति सांघिकं शय्यासनं अध्युपेक्षितुं। उत्पादकम्वा उत्थितकम्वा प्राणकेहि वा खज्जन्तं वर्षेण ओवर्षयन्तम्वा वाततपेन वा विनाशियन्तं पक्षीहि वा ओहियन्तं[3]।

अथ खलु यदि ता-[11B. P. 6. L. 6.]व उज्झित प्रकीर्णं भवति साहरित्वा एकान्ते स्थापयितव्यं। उत्पादकं भवति समापेतव्यं। वर्षेण ओवर्षियति वातातपेन वा विनाशीयति छन्ने प्रविशयितव्यं। प्राणकेहि खाद्यन्ति[4] पक्षीहि ओहयियन्ते प्रस्फोटियानच्छन्ने प्रवेशयितव्यं। न दानि विहारो अध्युपेक्षितव्यो। ओद्रिएणको[5] प्रलुर्गको अचौक्षो वा अप्रतिसंस्कृतो वा। अथ खलु यदि ताव तृणच्छदनो[6] भवति तृ-[11. B. - P. 6. L. 7.]णपुलको[7] दातव्यो। अपक्कच्छदनो भवति अपक्का दातव्या।

---

१. Ms. भिक्षु ।

२. Ms. भगवा ।

३. From this word almost the whole line is of difficult reading.

४. Ms. खाद्यति ।

५. Ms. ओहएणको ।

६. Ms. मृण° ।

७. Ms. मूल° ।

कभल्लच्छदनो भवति कभल्लिका दातव्या। सुधामृत्तिकाच्छदनो भवति मृत्पिण्डो दातव्यो। वर्षाय ओवृष्टो भवति विखल्लिका ओपुरे[त]व्या वंघोरिका दातव्या गोमयशाय्यो दातव्यो। न दानि क्षमति सांघिकं शय्यासनं एवमेव[1] परिभुञ्जितुं अप्रत्यास्तरं वा तलं वा प्रस्तरो कृत्वा लङ्कटकं वा। अथ खलु प्र-[11. A. P. 7. L. 1.]त्यास्तरं कर्त्तव्यं। नापि क्षमति कल्यं कर्त्तुं। पटिकाम्वा लोट्टकम्वा प्रत्यास्तरणं कर्त्तुं।

अथ खलु द्विगुणिता नाम कर्तव्या। विशिष्टा मञ्चातो वा। यदि ताव कम्वलस्य भवति एकपुटं वा द्विपुटम्वा कर्त्तव्यं। अथ दानि कर्पासस्य भवति द्विपुटा वा त्रिपुटा वा कर्त्तव्यो समन्तेन सूत्रेण शिवियाणं। ततो मध्येण दीर्घसूत्राणि दातव्यानि। ततो न क्षमति शय्यासनं ओमयिलोमयिलं वा पाटितविपाटितम्वा अध्यु-[11. A. P. 7. L. 2.]-पेक्षितुं। अथ खलु कालेन कालं धोवितव्यं[2] कालेन कालं शिञ्चितव्यं कालेन कालं आतपे दातव्यं। न क्षमति सांघिकेन शय्यासनेन प्रावृतेन भक्ताग्रे वा तर्पणाग्रे वा सामायिकम्वा उपविशितुं। न क्षमति शय्यासनं सांघिकं प्रावरियं दीर्घचंक्रमं चंक्रमितुं।

अथ दानि भिक्षुः शिराविद्धको वा भवति विरेचन पीतको वा ग्लानको वा भवति वस्त्रपुर्गलिकं अन्तरीकरणं ददि-[11. A. P. 7. L. 3.]-य[3] तं चंक्रमति अनापत्तिः। नापि क्षमति सांघिकं शय्यासनं पौद्गलिक-परिभोगेन परिभुञ्जितुं। अथ खलु सांघिकं शय्यासनं प्रज्ञपयितव्यं।

---

1. After this about twentyfive letters are illegible, but we tried to give some readings.
२. Ms. बोधितव्यं।
३. Ms. उदिय।

प्रत्यास्तरणं ददिय ततो परिभुञ्जितव्यं। अथ दानि सांघिकं शयनासनं महन्तं भवति उपरितो भुञ्जितव्यं यथा नाशं न गच्छे। अथ दानि हेमन्तकालो भवति साघिकं शय्यासनं प्रावरिय शयति [11. A.P 7.L.4.] अन्तरीकरणं[1] दातव्यं। न देति विनयातिक्रममासादयति। एवं शय्यासने[2] प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ते दानि भिक्षू उपगच्छनिका काले विरहान्नप्रतिसंस्करोन्ति[3]।

पञ्चार्थवशां[4] संपश्यमानांस्तथागता अर्ह-[11. A. P. 7. L. 5.]न्तः सम्यक्संबुद्धाः पञ्चाहिकां विहारचारिकामनुचंक्रमन्ति अनुविचरन्ति। कतमां पञ्च? कच्चि मे श्रावकाः न कर्मारामाः न कर्मरताः न कर्मारामतानुयोगमनुयुक्ता[5] विहरन्ति। न भाष्यारामाः न भाष्यरताः न भाष्यारामतानुयोगमनुयुक्ता विहरन्ति। न निद्रारामाः [निद्रारताः] न निद्रारामतानुयोगमनुयुक्ता विहरन्ति। ग्लानकां-[11. A. P. 7. L. 6.]नाञ्च भिक्षूणामनुकम्पार्थं। ये च ते श्राद्धाः कुलपुत्राः तथागतमेवोद्दिश्य [श्रद्धयादा]गारादनगारिकां प्रव्रजिताः ते च तथागतं दृष्ट्वा अतीव उदाराणि प्रीतिप्रामोद्यानि प्रतिलभिष्यन्ति इमां पञ्च अर्थवशां[7] संपश्यमानास्तथागता अर्हन्तः सम्यक् सम्बुद्धाः पञ्चाहिकां विहारचारिकां अनुचंक्रमन्ति अनुविचरन्ति।

१. Ms. °करण।
२. Ms. शय्यसनं।
३. Ms. °संस्करेन्ति।
४. Ms. पञ्चान्ववशां।
५. Ms. कमीरामता अनुत्याग॰।
६. Ms. अभिरिवो, but cf. 11B. P6. L3.
७. Ms. अन्ववशां।

अद्राक्षीद्भगवां पश्चाहिकां विहारचारिकां अनुचंक्रमन्तो अनुवि-[11. A. P. 7. L. 7.]चरन्तो विहारकान्वन्द्रिन्नकां[१] पलुर्गकां अचौक्षां अप्रतिसंस्कृतां शय्यासनं उज्भितप्रकीर्णं ओमयिलिमयिलं[२] पाटितविपाटितं मञ्चाम् पीठा ओन्द्रिएणाकां पलुर्गकां उत्थितकां वातातपेन ओपूरियंतां प्राणकेहि खजन्तां वर्षेण ओवर्षयन्तां काकशकुन्तेहि ओहपियन्तां। भगवान् जानन्तो पृच्छति—कस्येमे भिक्षवो, विहारका ओन्द्रिन्नका[३] पलुग्गका अचौक्षा अप्रतिसंस्कृता शय्यास-[11. B. P. 7. L. I.]नं उज्भित[४] प्रकीर्णं ओमयिलोमयिलं पाटितविपाटितं मञ्चा पीठा ओद्रिएणका पलुग्गकां उत्थितकां वातातपेन ओपूरियन्तां प्राणकेहि खजन्तां वर्षेण ओवर्षियन्तां काकशकुन्तेहि ओहयियन्तां ? भिक्षू आहंसु-इमं भगवन्, संघस्य। ये वर्षा[५] उपगच्छिष्यन्ति ते प्रतिसंस्करिष्यन्ति। भगवानाह—तेन हि एवं वर्षोपनायिके शय्यासने प्रतिपद्यितव्यं। किन्ति दानि एवं वर्षोपनायिके[६] शय्यासने प्र-[11. B.-P. 7. L. 2.]तिपद्यितव्यं ?

एषा दानि संघस्य वर्षोपनामिका भवति प्रतिकृत्यैव[७] ताव दायकदानपति प्रतिसरितव्या। ततो विहारका प्रतिसंस्कर्त्तव्याः। ये विहारका उद्दिएणका पलुग्गका भवन्ति। अचौक्षा वा अप्रतिसंस्कृता वा भवन्ति।

---

१. Ms. विहारकान्तु।
२. Ms. ओमयिलेमयिलं, but cf. 11B. P7. L4.
३. Ms. ओद्रिएणुका।
४. Ms. उज्ज्ञित।
५. Ms. धर्मा।
६. Ms. वर्षोपनमिके।
७. Ms. प्रकृत्यैव which is also used in some places.

यदि ताव सुधाच्छदनो भवति सुधापिण्डो दातव्यो। इष्टकाच्छदनो भवति इष्टका दातव्या। अपक्काच्छदनो भवति अपक्का दातव्या। कभल्ल[11. B. - P. 7. L. 3.]च्छदनो भवति कभल्लिका[१] दातव्या। तृणच्छदनो भवति तृणपुलको दातव्या। मञ्चा वा पीठा वा ओद्रिण्णका पलुग्गका भवन्ति मुंजा कर्त्तितव्या वलुजा[२] कर्त्तितव्या। मञ्चा धूणितव्या[३] उप्पादका[४] भवन्ति सपेच्छपयितव्या। दुत्थपिता भवन्ति सुत्थपिता कर्त्तव्या। वातातपने विनाशियन्ति[५] काकशकुन्तेहि वा ओहपियन्ति छुन्ने स्थपितव्या। एवं शय्यासनं [11. B. P. 7. L; 4.] भवति ओमयिलमयिलं पाटितविपाटितं धोविय सीवितव्यं। मृत्तिकापिण्डो दापयितव्यो[६]। मूषिक उच्छिरा वा याव वंघोरिका पूरेतव्या। यं तहिं परिवेणो भवति[७] भण्डं नियतकं सर्वं समुदानितव्यं।

पञ्चेहि अङ्गेहि समन्वागतो भिक्षुः शय्यासनप्रज्ञापक संमुतीये[८] संमन्यितव्यो। कतमेहि पञ्चहि? यो नच्छन्दा यो[९] न दो-[11. B. P. 7. L.- 5.]षा यो न मोहा यो न भया यो प्रज्ञप्तं च जानाति। इमेहि पञ्चहि ॥ पेयालं ॥

---

१. Ms. कम॰।

२. Ms. not clear.

३. Ms. धूणितका।

४. Also उत्पादक॰ cf. 11B. P6. L5 & 6.

५. Ms. ओतवियन्ति, cf. 11B. P6. LL 5 & 6. But the word gives a meaning cf. it is corrected as ओतपियन्ति।

६. Ms. दापितव्यो।

७. Ms. परिवेशे भवति।

८. Ms. समुतीये।

९. Ms. ये।

कर्मं कृत्वा याव ते दानि संमन्ति[१] । न आषाढमासं शय्यासनं ग्राहेतव्यं— विहारा परिवेणा अग्निशाला भक्तशाला[२] उपस्थानशाला । द्वारकोष्ठकौ वर्चकुटी उदपानो जन्ताको चंक्रमा वृत्तमूला विहारका ग्राहयितव्या । अमुके विहारे एत्तका[३] मञ्च-[11 B. P. 7. L. 6.]का पीठका वा । एत्तकं[४] आस्तरणं । एत्तकं[५] प्रावरणं । ततो लिखितव्यं भुर्जके फलके वा पट्टिकायाम्वा । यदि ताव आरण्यकं[६] शय्यासनं भवति दूरे दूरे[७] परिवेणा भवन्ति[८] त्रयोदशीयं वा चातुर्दशीयं वा तेन शय्यासनोद्देशो कर्त्तव्यो । अथ दानि ग्रामान्तिकं शय्यासनं भवति आसन्ने आसन्ने परिवेणा भवन्ति चातुर्दशीयम्वा पाश्चदशीयम्वा शय्यासनो-[11. B. P. 7. L. 7.]-द्देशो कर्त्तव्यो । तं लिखितं संघस्थविरस्य अल्लीपितव्यं । वक्तव्यं—आयुष्मन्, अमुके विहारके एत्तका[९] मञ्चा । एत्तका[१०] पीठाः । एत्तकं[११] आस्तरणं । एत्तकं[१२] प्रावरणं । कतमो तव विहारको रुच्यति ? यो संघस्थविरस्य विहारको सो दातव्यो । अथ दानि संघस्थविरो जल्पति विहारं यूयं

---

१. Ms. समन्ति ।
२. Ms. तक्कुशाला ।
३. Ms. एतुका ।
४. Ms. एतुकं ।
५. Ms. एतुकं ।
६. Ms. आवरयकं ।
७. Ms. दूरो ।
८. Ms. भवति ।
९. Ms. एतुका ।
१०. Ms Ibid.
११. Ms. एतुकं ।
१२. Ms. Ibid.

उद्दिशथ वर्षावासिकं समं करिष्यामन्ति। यं संघस्थविरो जल्पति तथा कर्त्तव्यं [11. A. P. 8 L. 1.]।

ततो विहारका उद्दिशितव्याः। वृद्धान्ततो[1] प्रभृति याव अवर्षक-पर्यन्तं[2]। न क्षमति श्रामणेराणां विहारा[3] उद्दिशितुं। अथ दानि तेषां उपाध्यायाचार्या जल्पन्ति उद्दिशथ यूयं एतेषां वयं प्रतिसंस्करिष्या-मन्ति। ततो श्रामणेरकाणां पि विहारका उद्दिशितव्या। अथ दानि बहुं भवति ततो द्वितीय कालिका उद्दिशितव्या। अथ दानि तहिं[4] कोचि भवति आटकरसिंहनादिको [11. A. P. 8. L. 2.]पर्यात्तो। ग्रीष्मेव[5] शय्यासनं उद्दिशितव्यं गुप्त्यर्थं परिभोगार्थं उत्थिष्यं उत्थापयिष्यं। को विहारकोति ? वक्तव्यो— न एषो भव किंचित् भोगार्थं वदिष्यन्ति प्रति-संस्करणार्थं[6] एषो च उद्दिशीयति। अथ दानि स्तोका विहारका भवन्ति द्विएणां त्रयाणां वा जनानां एको विहारको उद्दिशितव्यो। अथ दानि एवं पि स्तोका भवन्ति चतुर्णां पञ्चानां वा जनानां एको विहार[11. A. P.-8. L. 3.]को उद्दिशितव्यो।

अथ दानि एकवस्तुकं भवति। भिक्षू च बहू भवन्ति वृद्धानाञ्च मञ्चा प्रज्ञापयितव्याः नवकानां पीठाः प्रज्ञापयितव्याः। अथ दानि एवं पि स्तोकं भवति वृद्धानां पीठाः प्रज्ञापयितव्याः नवकानं सस्तरणा

---

१. Ms. वृद्धान्तो।
२. Ms. अवर्यक॰।
३. Ms. विहार।
४ Ms. तद्दे।
५. Ms. ग्रीष्मेण।
६. Ms. म प्रति॰, म having no meaning.

प्रज्ञापयितव्याः । अथ दानि एवं पि स्तोकं भवति अल्पावकाशो[१] भवति वृद्धानं संस्तरणा प्रज्ञाप[11. A. P. 8. L. 4.]यितव्याः[२] नवकोहि च्छन्ने[३] वीतिनामयितव्यं । अथ दानि एवं पि अल्पावकाशो भवति वृद्धेहि च्छन्ने प्रविशितव्यं नवकेहि वृक्षमूलेहि चंक्रमेहि निपद्याहि अभ्यवकशे वीतिनामयितव्यं ।

हेमन्ते शय्यासनं उद्दिशितव्यं—गुप्त्यर्थं परिभोगार्थं उत्थिष्यं उत्थापयिष्यं । वर्षासु शय्यासनं उद्दिशितव्यं—गुप्त्यर्थं परिभोगार्थं उत्थिष्यं[४] [11. A. P. 8. L. 5.] उत्थापयिष्यं[५] । नपि [दानि क्षमति] शय्यासनं अघ्युपेक्षितुं ओमयिलोमयिलं पाटितविपाटितं मञ्चा वा पीठा वा ओद्रिएणका[६] वा पलुग्गका अघ्युपेक्षितुं ।

अथ खलु कालेनकालं शय्यासनं सीवितव्यं धोवितव्यं[७] । कालेन कालं मुञ्जा कर्तितव्या वलुजा कर्त्तितव्या । ततो मञ्चा च पीठा च वणितव्या । एवं वर्षोपनामिके शय्यासने प्रतिप[11. A. P. 8. L. 6.]द्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यांविहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा यावं अद्राक्षीद्भगवां पञ्चाहिकां विहारचारिकामनुचंक्रमन्तो

---

१. Ms. अल्पो चकालो ।

२. Ms. वृद्धेहि संस्तरणे प्रतिपाद्यतव्यं ।

३. Ms. पर्यन ।

४. Ms. उत्थास्यं ।

५. Ms. उत्थापयितव्यं ।

६. Ms. ओन्द्रिणुका ।

७. Ms. बोवितव्यं ।

अनुविचरन्तो विहारकां ओद्रिएणकां पलुग्गकां उल्लाय गृहीतकां अचौत्तां अप्रतिसंस्कृतां उदकस्य पूरां उदकभ्रमामशोधितकाद्वा[1] [11. A. P. 8. L.7.] द्वीपिकाहि खज्जन्तां। मञ्चां पीठां ओद्रिएणकां[2] पलुग्गकां उत्थितकां वर्षेण [ओ]वर्षियन्तां प्राणकेहि खज्जन्तां।

भगवान् जानन्तो पृच्छति—किं इमं भित्तवो, विहारका उल्लग्गका[3] ओल्लाये गृहीतकाः। अचौत्ता अप्रतिसंस्कृता उदकस्य पूरां उदकभ्रमा अशोधितकाद्वा द्वीपिकाहि खज्जन्ता मञ्चा पीठा ओद्रिएणकां[4] पलुग्गकां उत्पादकां उत्थितकां वर्षेण[11. B. P. 8. L. I.]ओवर्षियन्तां[5] प्राणकेहि खज्जन्तां? भिक्षू आहंसु— ये[6] भगवान्, वर्षा वसिष्यन्ति ते प्रतिसंस्करिष्यन्ति।

भगवानाह—तेन हि एवं वर्षोपगतेहि शय्यासने प्रतिपद्यितव्यं। किन्तिदानि एवं वर्षोपगतेहि शय्यासने प्रतिपद्यितव्यं? एते दानि भित्तवो, वर्षोपगता भवन्ति तेहि[7] विहारका प्रत्यवेक्षितव्या। यदि ताव ओद्रिएणका वा पलुग्गका वा भवन्ति यावत् मूषिकोत्कारा वा चिकयल्लिका वा प्र-[11. B. P. 8. L. 2.]तिसंस्कारयितव्या। यदि ताव विहारको सुधाच्छदनो भवति [ सुधा दातव्या ]। इष्टकाच्छदनो भवति इष्टका दातव्या।

---

1. Ms. °शोधिकां द्वाराहि The last three letters are not clear but the subsequent reading in the same line gives a clear picture.
2. Ms. ओद्रोरिएणकर्णा।
3. Ms. उल्लानका।
4. Ms. ओद्रिणुकां।
5. Ms. वर्षा वर्षियन्तां।
6. Ms. पे।
7. Ms. तेनहि।

अपकच्छदनो भवति अपक्का दातव्या। कभल्लच्छदनो भवति [ कभल्लिका दातव्या तृणच्छदनो भवति ] तृणपुलको दातव्यो। उल्लाये गृहीतको भवति पिण्डं शाटिय मृत्तिकायो लिम्पितव्यो। भूपा[१] उक्कारा विलिखिखका पूरेतव्या। यदि ताव उच्येडनको विहारको भवति शक्कारोटेन वा पूरेतव्या[२] अपं-[11. B. P. 8. L. 3.]क पांसुकेन वा। अथ दानि उप्यंसुलो भवति गोमयकार्पी[३] दातव्या। उदकभ्रमा वा प्रणालिभ्रमा वा परिपूरिता भवन्ति शोधयितव्याः। मुण्डहर्मिया[४] प्रतिसंस्कर्त्तव्या। शय्यासनं ओमयिलोमयिलं[५] भवति पाटितविपाटितं धोवयितव्यं रञ्जेतव्यं। मञ्चा वा पीठा वा भग्नका भवन्ति छिन्नगण्ठिका कर्त्तव्या। ओद्रिण्णका वा पलुग्गका भवन्ति मु-[11. B. P. 8. L. 4.]ञ्जा कर्त्तितव्या मञ्चा व्रणितव्या पीठिका व्रणितव्या। उत्पादका भवन्ति समं थापयितव्या। दुत्थितका[६] भवन्ति सुत्थिता थपेतव्या। वातातपेन ओपूरयन्ति निवाते[७] थपितव्याः। वर्षेण ओवर्षियन्ते छन्ने थपितव्या। नापि क्षमति शय्यासनं अध्युपेक्षितुं ओमयिलोमयिलं वा पाटितवि-[11. B. P. 8. L. 5.]पाटितं वा। अथ खलु कालेन कालं धोवितव्यं सीवयितव्यं [ रंजयितव्यं ]। मञ्चा वा पीठा वा उप्पादका भवन्ति समा थपयितव्याः। दुत्थिता भवन्ति सुत्थिता थपितव्याः। ओद्रिण्णका भवन्ति पलुग्गका वा मुञ्चा कर्तितव्या वलुजा कर्तितव्यो।

---

१. Ms मूप।

२. Ms. प्लावेतव्या।

३. Ms. गोभपकार्पा।

४. Ms. मुण्ड॰।

५. In many places ओमयिलमयिलं, even ओमयिलेमयिलं।

६. Ms. उत्थितका।

७. Ms. नैवाते।

मञ्चा व्रणितव्याः पीठा व्रणितव्याः पादका दुत्थितका[1] भवन्ति सुत्थपिता कर्त्तव्याः। विहारका कालेन [11. B. P. 8. L. 6.] सिञ्चितव्या संमार्जितव्याः गोमयकार्पी दातव्याः। उदकभ्रमाः प्रनालिकाभ्रमा[2] वा कालेन कालं शोधितव्याः। पश्चाहे पश्चाहे शय्यासनं प्रत्योतापेतव्यं[3]। मञ्चा वा पीठा वा अन्यायतः कर्त्तव्यं। विहारो ओमस्वेदको[4] भवति मञ्चो भित्ति[तो] मोचेत्वा प्रतिपादिका दातव्याः। यथा प्राणकेहि न खाद्येया[5] सन्तानिका शाटितव्यो अन्वर्धमासं गोमय शा-[11. B. P. 8. L. 7.]ट्यो[6] दातव्यो। यदि ताव विहारो ओश करोति ओदको दातव्यो। अथ दानि ओस्वेदो[7] भवति शुद्धेन गोमयेन मर्दितव्यं। विहारो ओस्वेदको[8] भवति न दानि तहिं क्षमति हस्तशौचं वा कर्तुं पादशौचं वा। मुखम्त्रा धोवितुं[9] पादम्त्रा निर्मादयितुं। नापि दानि क्षमति विहारो पित्थित्वा[10] स्थपितुं अथ खलु कालेन कालं अपावुरितव्यो[11] यथा वातं लभेय्य। धूपेतव्यो इ-[12. A. P. I. L. I.]ट्ठेन शुर्जेन वा सक्तुहि वा। एवं वर्षोपगतकेहि

---

१. M. उत्थितका।
२. Ms. प्रनलि°।
३. Possibly प्रत्योत्थापेव्यं।
४. Also उस्वेदको cf. subsequent line.
५. Mostly खज० is used elsewhere.
६. Ms. °शाटो।
७. Ms. उस्वेदको।
८. Ibid.
९. Ms. धोयितुं।
१०. Pali—पिदहित्वा also पिधीयति, पिथीयति or पिथीयरे।
११. Probably अवापुरि० but अपापुर° also used in Pali.

शय्यासने प्रतिपद्यितव्यं। न प्रति पद्यति अभिसमाचारिकान् धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा अपरं दानि आरण्यकं शय्यासनं हिमदोषेण चित्तं न वसति। ते दानि आरण्यका विहारं बाहिरं अच्छियं कारियाण ग्रामान्तिकं[1] शय्यासनं ओक्कन्ता[2]। अथ खलु अच्छि[3][12. A. P. 1. L. 2.]हारको वनदवेन अच्छियाण[4] दग्धो। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह—तेन हि एवं वर्षंवुस्तेहि शय्यासने प्रतिपद्यितव्यं। किन्तिदानि एवं वर्षंवुस्तेहि[5] शय्यासने प्रतिपद्यितव्यं? एतं दानि आरण्यकं शय्यासनं हिमदोषेण चित्तं न वसति। न क्षमति आरण्यकेहि अशब्दकल्पिकाये[6] ग्रामान्तिकं शय्यासनं ओक्कमितुं। अथ खलु उत्सा[7]-[12.A.P.1.L.3. -] हेतव्या। तहिं[8] एको वा द्वौ वा त्रयो वा यावतका उत्साहन्ति[9]। यो प्रतिबलो वस्तुं। यदि उत्साहन्ति तेषां आहारेण उपस्तम्भं कर्त्तव्यं। यथा न विहन्येंसु[10]। अथ दानि उद्वहन्ति आह—किं वयं परित्यक्ताः? किस्म

१. Ms. श्रामन्तिकं।
२. Ms. ओक्रमितुं।
३. Ms. उच्छा॰।
४. Ms. आगच्छियाण।
५. Ms. वर्षवुन्तेहि।
६. Ms. अगच्छ॰।
७. Ms. उच्छा॰।
८. Ms. तहि।
९. Ms. उच्छा॰।
१०. Ms. विहन्येसु।

वयं वसामः ? यं तर्हि शय्यासनं भवति कोचवको वा उल्लायो वा चतुरस्रका वा कुम्भीयो वा कटहकानि वा सर्वं ग्रामान्तिकं [12. A. P. 1.-L. 4.] शय्यासनं ओतारेतव्यं। मञ्चा पीठा उल्लपित्वा स्थापयितव्या। मञ्चा भित्तितो[1] मोचेत्वा प्रतिपादका दातव्या। यथा प्राणकेहि दीपिकाहि वा न खज्जेया[2]। नापि दानि क्षमति सो विहारो अध्युपेक्षितुं। ओद्रिण्णको[3] वा प्रलुग्गको[4] वा अचौक्षा वा अप्रतिसंस्कृतो वा। अथ खलु यदि ताव तृणच्छदनो वा भवति तृणपुलको दातव्यो। याव गो-[12. A. P. 1.-L. 5.]मय शाद्यो[5] दातव्यो। परिभाण्डं कर्त्तव्यं। श्वेतवर्णा दातव्या। समन्तेन विहारस्य ताव प्रतिकृत्येव अग्निहरणी कर्त्तव्या भृतकेहि च कर्मकरेहि च विहारस्य चतुः पार्श्वे वृक्षं[6] जातकं भवति सो लवापयितव्यो। यं कालं शुष्कं भवति निष्प्राणकं ततोग्निना दहापयितव्यो। विहारको सिञ्चितव्यो सम्मार्जितव्यो [12. A. P. 1. L. 6.] गोमयकार्षी दातव्या। यं सारासारं शय्यासनं अमिला वा अस्तरणिका[7] वा कोचका वा मकुचका वा गुड गुडका वा ते ग्रामान्तिकं शय्यासनं नेयापयितव्याः[8]। मञ्चाः प्रतिपादकेहि स्थापयितव्या भित्तितो मुक्ताः। मञ्चस्य उपरि पीठा स्थापयितव्या। पीठस्य उपरि यं तत्र शय्यासनं ओमयिलोमयिलं पाटित-

१. Ms. भित्तियो।
२. Ms. खद्येया।
३. Ms. ओन्द्रिण्डको।
४. Ms. पलुगंको।
५. Ms. शाटो।
६. Ms. फर्चं।
७. Ms. अन्तरिकां।
८. Ms. नापयितव्या।

विपाटितं [तं][1] स्थापयितव्यं। चीवरवंशे स्थापयितव्यं [12A. P1. L7.] भित्तितो मुक्तं। यदि ताव विहारो उप्पीडनको भवति न क्षमति लेनानि बन्धितुं। अथ खलु मुक्तका कर्त्तव्या। अथ दानि उप्पंसुलका विहारका वाहिरघट्टिमा कर्त्तव्याः। सर्वेहि निर्धारितव्या[2]। एकेन अभ्यन्तरघट्टिमं विहारकां करिय रज्जुये वा कडेवरिका परा[3] ओतारितव्यं। ओतरिय रज्जुये वा कडेवरिका अभ्यन्तरे क्षिपितव्या वाह्येन वा अच्छितव्या। ये [12. B. P. I. L. I.] तत्र भवन्ति गोपालका वा पशुपालका वा तेषां सो विहारो अनुपरिन्दितव्यो। ते वक्तव्याः—दीर्घायू, गच्छाम ताव। यं ग्रामान्तिकं शेय्यासनं एषो तुम्हाकं[4] विहारको अनुपरिन्दितो भवतु। एवं अनुपरिन्दियाण गन्तव्यं।

अथ दानि ग्रामान्तिकं शेय्यासनं भवति एवंप्येव[5] सर्वं प्रतिसंस्कारो कर्त्तव्याः याव श्वेतवर्णा दातव्या। एतानि महन्तानि वस्तूनि भवति। यथा [12. B. P. 1. L. 2.] अग्निशाला वा उपस्थानशाला वा यदि ताव सस्वामिकं भवति तेन प्रतिसंस्कारापेतव्या[6]। उद्दिष्टकोपि चे अस्य[7] भवति तेन प्रतिसंस्कर्त्तव्या। अथ दानि नैव सस्वामिको भवति नापि उद्दिष्टको सर्वसंघेन प्रतिसंस्कर्त्तव्यो। सामग्रीये संविदित्वा तहिं एकमेको

---

१. Ms. पीठस्य उपरि repeated.
२. Ms. निघारितव्या।
३. Ms. seems परे।
४. Ms. तुस्यकं।
५. Ms. येव।
६. Ms. °संस्कारोयेतव्या।
७. Ms. नाग्रो यस्व।

वा शमो[1] दातव्यो द्वे वा द्वे वा त्रयो वा यथा सर्वप्रतिसंस्कारो गच्छेव आ-[12. B. P. 1. L. 3.]दातव्यं। मञ्चा वा पीठा वा उल्लग्नका भवन्ति अपच्छितव्या। अयं च्छन्तियो कर्त्तव्याः। उन्नीयो वा विशियो[2] वा चतुरस्रका वा ओमयिलोमयिला भवन्ति पाटितविपाटिता धोवित्वा सिवितव्या प्रत्यर्गलानि दातव्यानि। भण्डं नियतकं भवति समुदानेतव्यं। ग्रामान्तिकं शेय्यासनं उदकदोषेण चित्तं[3] न संवसति। न त्तमति तेहि अ-[12. B. P. 1. L. 4.]शब्दकल्पिकाये[4] आरण्यकं शेय्यासनं गन्तुं।

अथ खलु प्रतिकृत्येव ताव यं तत्र सारासारं भाण्डमस्तरंण वा प्रावरणं वा उपस्करो[5] वा श्रद्धा प्रसन्नेहि उपासककुलेहि स्थापयितव्यं। विहारको संमार्जयितव्यो गोमयकार्षी दातव्या मंचा प्रतिपादकेहि स्थातव्या भित्तितो मुक्तं। मञ्चस्य उपरि पीठं स्थापयितव्यं। पीठस्योपरि यं त-[12.-B. P. 1. L. 5.]त्र जर्जर विसि वा जर्जर चतुरस्रको वा स्थापयितव्यं। यदि ताव उप्पीडनको विहारो भवति ततो लेनानि मुक्तानि स्थापेतव्यानि। अथ दानि उप्यंसुलको विहारो[6] भवति लेनानि वाहिरघट्टिमानि कर्त्तव्यानि सर्वे भिक्षुहि निर्धावन्तेहि[7] एकेन विहारको अत्यन्त घट्टिमो कर्त्तव्यो। प्रतिवेशिकुलातो निश्रेणिआनिय[8] ततो ओ-[12. B. P. 1. L. 6.]तरितव्यो।

---

१. शमो is doubtful; possibly it is श्रमो।
२. Ms. रिणिओ sometimes विशिओ cf. 11B.P1.L5; and 12A. P3.L4.
३. Ms. रितुं।
४. Ms. °कणिकाये।
५. It is doubtful; probaly it is °चतुरस्रको।
६. Ms. उप्पसुलको विहा।
७. Ms. निधावन्तेहि।
८. Ms. °या विय।

ये तत्र प्रतिवेशिका भवन्ति तेषामनुपरिन्दितव्यं । दीर्घायु, एषो विहारको तुम्हाणं[1] अनुपरिन्दितो भवतु । गच्छाम वयं आरण्यकानि शेय्यासनानि एवं प[रि]न्दिय गन्तव्यं । एवं वर्षवुस्तेहि[2] शेय्यासने प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान् धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्त-[12. B. P. 1. L. 7.]रेण निदानं कृत्वा पश्चार्थवशां[3] विस्तरेण [निदानं] कृत्वा यावदद्राक्षीद्भगवां पश्चाहिकां विहारचारिकां अनुचंक्रमन्तो अनुविच-रन्तो विहारका ओद्रिण्णकां प्रलुग्गकां अचौक्षां अप्रतिसंस्कृतां । शेय्यासनं उज्झितप्रकीर्णं ओमयिलोमयिलं पाटितविपाटितं । मञ्चा च पीठा च ओन्द्रि-ण्णका प्रलुग्गका उप्पादका उत्थितका वर्षेण ओवर्षियन्ता[4] प्राणकेहि खज्जन्ता[5] ।

भगवान् 12. A. P. 2. L. 1.] जानन्तो भिक्षू[6] पृच्छति—किमिदं भिक्षवो, विहारका ओद्रिण्णका पलुग्गका अचौक्षाः अप्रतिसंस्कृता[7] शेय्यासनं उज्झितप्रकीर्णं ओमयिलोमयिलं पाटितविपाटितं । मञ्चा च पीठा ओद्रिण्णका पलुग्गका उप्पादका उत्थितका वर्षेण ओवर्षयन्ता प्राणकेहि खाज्जन्ता ? ते दानि आहंसु—वयं भगवान्, आगन्तुका । ये नैवासिका ते संस्करिष्यन्ति । भगवानाह—तेन हि एवं आगन्तुकेहि शे-[12.A. P. 2. L. 2.]-

१. Ms. ओम्हाणं; The reading should be तुम्हाकं ।
२. should be वर्षा° ।
३. Ms. पञ्चय वत्तां ।
४. Ms. °यन्तां ।
५. Ms. खाचन्तां ।
६. Ms. भिक्षुं ।
७. Ms. °संस्कृताः ।

य्यासने प्रतिपद्यितव्यं। किन्तिदानि एवं आगन्तुकेहि शेय्यासने प्रतिपद्यितव्यं ? एते[1] दानि भिक्षू आगन्तुका भवन्ति विहारको उद्रिण्णोको[2] भवति मञ्चं पीठं[3] चतुरस्रकं गिरि[4] विंबोहनं[5] उद्दिण्णं[6] भवति। नापि क्षमति गतागतस्य विहारके भण्डं प्रवेशितुं।

अथ खलु यदि ताव अन्धकारको विहारको भवति प्रदीपो ज्वालयितव्यो। तृणोल्लका कण्डोल्का वा प्र-[12. A. P. 2. L. 3.]ज्वालयितव्या। प्रविशिय चीवरं च शोता च प्रत्यवेक्षितव्यो। अनेकाये प्राणकेहि खादितको भवति। यदि ताव प्राणकेहि खादितको भवति भग्नका वा तं अपनिय अन्यो किलको आकोटयितव्यो। पात्रप्रवेशिका स्थापयितव्या। मञ्चकञ्च प्रत्यवेक्षितव्यं[7]। यदि ताव विभग्नको वा छिन्नको वा भवति छिन्नगण्ठो कर्त्तव्यो। ओद्दिण्णको वा पलुग्गको [12. A. P. 2. L. 4.] वा भवति मुंजा[8] कर्त्तितव्या वलुजा कर्त्तितव्या। मञ्चा व्रणितव्या पीठा व्रणितव्या। विहारको शोधयितव्यो। सम्मार्जयितव्यो। भूय उकिरा वा भवति आकोटयितव्या। गोमयकार्षी दातव्या। मञ्चको प्रतिपादके स्थापयितव्यो। आस्तरणं प्रज्ञपिय प्रतिक्रमितव्यं। यदि सर्वरात्रो गच्छति प्रति संस्कार-

---

१. Ms. एता।
२. Ms. उद्दिष्दको।
३. Ms. पीठं पि।
४. Ms. कुर्वं, Possibly भिसिं।
५. Ms. विवोसनं।
६. Ms. उपिटं।
७. Ms. °तव्यः।
८. Ms. खंजा।

यन्तस्य सर्वरात्री प्रतिसंस्कारयि-[12. A. P. 2. L. 5.]तव्यं। एवं आगन्तुकेहि शेय्यासने प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा पञ्चार्थवशां यावदद्राक्षीद्भगवां पञ्चाहिकां विहारचारिकामनुचंक्रमन्तो अनुविरचन्तो विहारकां ओद्रिएणकां पलुग्गकां अ-[12. A. P. 2. L. 6.]चौद्यां अप्रतिसंस्कृतां शेय्यासनं ओमयिलोमयिलं पाटितविपाटितं। मञ्चा पीठा ओद्रिएणकां[1] पलुग्गकां उप्पादकां उत्थितकां वर्षेण ओवर्षियन्तां प्राणकेहि खज्जन्तां। भगवान्जानन्तो पृच्छति किं इमे भिक्षवो, विहारका ओद्रिएणका पलुग्गका अचौद्या अप्रतिसंस्कृता शय्यासनं ओमयिलोमयिलं पाटितविपाटितं। मञ्चा पीठा ओद्रिएणका पलुग्गका उप्पादका उत्थि-[12. A. P. 2. L. 7.]तका वर्षेण ओवर्षयन्ता प्राणकेहि खज्जन्ता? भिक्षु आहंसु—वयं भगवान्नेवासिका। ये आगन्तुका ते प्रतिसंस्करिष्यन्ति।

भगवानाह—तेन हि एवं नेवासिकेहि[2] शेय्यासने प्रतिपद्यितव्यं। किन्तिदानि एवं नेवासिकेहि शय्यासने प्रतिपद्यितव्यं? नायं ताव[3] क्षमति नेवासिकेहि[4] ये विहारका ओद्रिएणका पलुग्गका अचौद्या अप्रतिसंस्कृता ते आगन्तुकानां [12. B. P. 2. L. 1.] स्थापयितुं। यदि आगन्तुकानां मातु अत्यायिकं भविष्यन्ति ततो नं प्रतिसंस्करिष्यन्तीति। अथ खलु

१. Ms. °रणका।
२. In the following lines the term नेवासि° is used as निवासि°।
३. Ms. श्रव°।
४. Ms. नैवा°।

ये विहारका नवका च सुप्रतिसंस्कृता च ते आगन्तुकानां स्थापयितव्या। नापि क्षमति शेय्यासनं ओमयिलोमयिलं पाटितविपाटितं आगन्तुकानां स्थापयितुं। यदि आगन्तुकानां मातु अत्यायिकं भविष्यति ततो धोविष्यन्ति रञ्जिष्यन्ति सीविष्यन्ति[१]। अथ खलु यं [12. B. P. 2. L. 2.] शेय्यासनं नवकं सुधोतं च सुरक्तं च तं आगन्तुकानां स्थापयितव्यं। नापि क्षमति ये मञ्चा वा पीठा वा पलुग्गका[२] वा ओद्रिण्णका[३] वा [ते] आगन्तुकानां स्थापयितुं। यदि आगन्तुकानां मातु अत्यायिकं[४] भविष्यति ततो व्रणिष्यन्ति। अथ खलु ये मञ्चा वा पीठा वा नवा च सारा[५] च सुधोता च ते आगन्तुकानां स्थापयितव्या। नापि क्षमति अध्युपेक्षितुं। अथ खलु वि-[12. A. P. 2. L. 3.]हारकाणां कालेन कालं खण्डफुट्टं[६] प्रतिसंस्कर्त्तव्यं। शेय्यासनं धोवितव्यं सिवितव्यं रञ्जितव्यं। मञ्चा वा पीठा वा भग्ना वा भवन्ति छिन्नगण्ठिका कर्त्तव्या। ओद्रिण्णका वा पलुग्गका वा भवन्ति मुञ्जा कर्त्तितव्या वलुजा कर्त्तितव्या मञ्चा व्रणितव्या पीठा व्रणितव्या। मञ्चा वा पीठा वा उप्पादका भवन्ति समं स्थापयितव्या। उत्थापितका[७] [12. B. P. 2. L. 4.] भवन्ति सुस्थिता[८] कर्त्तव्या।

१. Ms. सीविष्यन्ती।
२. Ms. प्रलर्गका।
३. Ms. ओद्द्रिन्तका।
४. Ms. अत्यायकं।
५. Probably it is [सु]रक्ता in relation to नवकं, सुधोतं etc. stated in previous lines.
६. Ms. प्राडुं; Pali खण्डफुल्लं, cf. Vin. II. (Cul.) P. 160.
७. Probably दुत्थापितका; also दुत्थितका in the following p. 12A. P3. L7. see also ante p. 54.
८. Sometimes सुत्थिता।

वातातपेन ओपूरियन्ति[1] निवाते स्थापयितव्या। काकशकुन्तकेहि[2] ओह-पियन्ति छन्ने स्थापयितव्याः। वर्षेण ओवर्षियन्ति[3] निरोवर्षे स्थापयितव्या। प्राणकेहि खज्जन्ति छिन्नगण्ठिका[4] करिय प्रतिपादकेहि स्थापयितव्या। एवं नेवासकेहि शय्यासने प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारि-कान्धर्मानतिक्राम[12. B. P. 2. L. 5.]ति ॥३॥

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा यावदद्राक्षीद्भगवान् पञ्चाहिकां विहारचारिकानांमनु-चंक्रमन्तो अनुविरचन्तो विहारकां ओद्रिएणकां पलुग्गकां अनभिसंस्कृतां उब्बाये गृहीतकां शेय्यासनं ओमयिलोमयिलं पाटितविपाटितं मञ्चा च पीठा च ओद्रिएणकां पलुग्गकां उप्पादकां [ 12. B. P. 2. L. 6. ] उत्थितकां वातातपेन ओपूरियन्तां काकशकुन्तेहि[5] ओहपियन्तां[6]। वर्षेण ओवर्षियन्तां प्राणकेहि खज्जन्तां।

भगवान् जानन्तो येव[7] भिक्षू पृच्छति--किं एते भिक्षवो, विहारका ओद्रिएणका पलुग्गका। शेय्यासनं ओमयिलोमयिलं पाटितविपाटितं। मञ्चा पीठा च ओद्रिएणका पलुग्गका उप्पादका उत्थितका वातातपेन ओपूरियन्ता काकशकुन्तेहि ओहपियन्तां वर्षेण [ओ]वर्षियन्ता प्रा-[12. B.P.2. L.7.]ण-

---

१. Ms. ते पूरि॰।
२. Ms. काकणकुन्नकाह।
३. Ms. ते वर्षि॰।
४. Ms. छिन्नगण्ठियका।
५. Ms. ॰राकुन्नेहि।
६. Ms. ओहर्पियन्तां।
७. Ms. ये च।

केहि खञ्जन्ता। भिक्षू आहंसु—ये भगवं, आगन्तुका च नेवासिका च ते प्रतिसंस्करिष्यन्ति। वयं विहारवासिनो[१]।

भगवानाह—तेन हि एवं सर्वेहि शेय्यासने प्रतिपद्यितव्यं। किन्तिदानि एवं हि सर्वेहि शय्यासने प्रतिपद्यितव्यं? एते दानि विहारका भवन्ति ओद्रिएणका पलुग्गका आचौत्ता अप्रतिसंस्कृता। ततो रणरणाये गण्डिं आहणिय सर्वसंघेन सन्निपति [12 A. P. 3. L. 1] तव्यं। अथ दानि कश्चिदाह। अहन्धर्मकथिको अहं विनयधरो अहमारण्यको पिण्डचारिको पांसुकुलिको—एते दानि[२] श्रमणका ते प्रतिसंस्करिष्यन्तीति। ते विनायातिक्रममासादयन्ति।

अथ खलु सर्वेहि सन्निपतितव्यं। अन्येहि ताव मृत्तिका मर्दितव्या[३]। अन्येहि खाण्डकारि शालिका वा पिण्डका वा परिपूरिय दातव्या। अन्येहि परिहरितव्यं। अन्येहि लिप्यितव्यं। अ[12 A. P. 3. L. 2.]न्येहि मज्जितव्यं। अन्येहि उदकं परिहरितव्यं। अथ दानि अङ्गं[४]लिप्यितव्यं भवति भिक्षु च शाय्येन[५] करेन्ति। किं कर्त्तव्यं? मितकं दातव्यं। इमन्तव खण्डं इमं तव खण्डन्ति। इमं [त्व]या प्रतिसंस्कारयितव्यं। एते विहारका उल्लाये गृहीतका भवन्ति अप्रतिसंस्कृता वा उप्यंसुला वा। सर्वसंघस्य गण्डिमाकोटयित्वा अन्येहि तावद्या[व] भित्ति ओल्लाये गृहीतकायो तायो शा-[12. A. P. 3. L. 3.]टयितव्यो। अन्येहि मृत्तिका मर्दितव्या। अन्येहि उदकः परिहरितव्यः। अन्ये[हि]मृत्तिका परिहर्त्तव्या। अन्योलेपो दातव्यः।

१. Ms. इत्वार।
२. Ms. य एतो द्रोणी।
३. Ms. गृह्वितव्या।
४. Ms. वङ्ग; Even re. reading is not a happy one.
५. If it is not 'स्वयमेव', then the meaning is not clear.

अन्यैः संमार्जितव्यं। विहारका उप्पेउनका[1] भवन्ति शर्करटका वा आपक-पांसुको वा परिहरितव्यो। आकोटयितव्यो। अथ दानि उपंसुलका विहारका भवन्ति अन्यैर्गोमय परिहर्त्तव्यः। अन्यै-[12. A. P. 3. L. 4]रुदकं परि-हर्त्तव्यः। अन्येहि[2] धोवापयितव्यं[3]। अन्येहि गोमयकार्षी दातव्या। नापि दानि अध्युपेक्षितव्यं। शेय्यासनं ओर्णियो[4] वा कोचवको[5] वा प्रवारा[6] वा विसियो वा चतुरस्रको वा बिम्बोहनका वा चिलिमिलिका वा ओमयिलमयिला वा पाटितविपाटिता[7] वा अचौक्षा वा अप्रतिसंस्कृता वा। अथ खलु कालेन कालं अ-[12. A. P. 3. L. 5]न्येहि ओपा गालयितव्यो। अन्येहि उदकं परिहर्त्तव्यं अन्येहि क्षारं आनयितव्यं अन्येहि धोवयितव्यं[8] अन्येहि पीडितव्यं अन्येहि विसयितव्यं अन्येहि परिहर्त्तव्यं। मञ्चा वा पीठा वा आद्रिएणका वा पलुग्गका[9] वा भवन्ति। सर्वेहि मुञ्जा वा वलुजा वा कर्त्तितव्या। मञ्चा वा वातव्या पीठा वातव्या विसी सीवयितव्या। चतुरस्रां [उत्था]प[12. A. P. 3. L. 6.]यितव्या। निंगलानि[10] उत्थापयित-व्यानि। एते मञ्चा वा पीठा वा भग्नका वा भवन्ति यो यं पश्यति

---

१. Ms. उप्येडनका।
२. Ms. अन्यैहि।
३. Ms. अध्वापयितव्यं।
४. It is उन्नीयो in 12B. P1. L3.
५. Pali : कोजव, cf. Vin. I. 182; DhA, I, 177.
६. Ms. प्रकारा ; But cf. Pali, DhA. III. 297 पावार॰।
७. Ms. विपाटिता repeated.
८. Ms. बोधयितव्यं।
९. Ms. पलुग्गका repeated.
१०. निगल or अर्गल might be the reading.

तेनप्येवं गण्ठी कर्त्तव्या। उप्पादका[1] भवन्ति यो येव[2]पश्यति तेन येव समं स्थापयितव्यं। दुत्थितका भवन्ति सुस्थितका कर्त्तव्या। वातातपेन वा ओपूरियन्ति। यो येव पश्यति तेनप्येव निवाते स्थापयितव्या। काकशकुन्तेहि वा ओहपियन्ति योप्येव पश्यति तेन प्येव[12. A. P. 3.-L. 7.]छन्ने स्थापयित्वा। वर्षेण ओवर्षयन्ति यो येव पश्यति तेन प्येव निरोवर्षे स्थापयितव्या। प्राणकेहि[3] खज्जन्ति[4] यो येव पश्यति तेन प्येव छिन्न गण्ठिका करियाण प्रतिपादकेहि स्थापयितव्या। एवं सर्वेहि शय्यासने प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विरहति शास्ता देवानाञ्च मनुष्याणाञ्च विस्त-[12. B. P. 3. L. 1.]रेण[5] निदानं कृत्वा ते दानि भिक्षू प्रकीर्णकस्य उच्छ्रासं[6] करेन्ति। जनो दानि ओध्यायति। पश्यथ भणे, श्रमणका यथा उष्ट्रा वा गोणा वा गर्दभा वा च्छगलका वा एवमिमे श्रमणा प्रकीर्णकस्य उच्छ्रासं[7] करेन्ति। नष्टं भ्रष्टं कुतो एषां[8] श्रामण्यं? एतं प्रकरणं भिक्षूहि श्रुतं। भिक्षु भगवतो आरोचयेंसु। भगवानाह—सत्यं भिक्षवो, जनो ओध्यायति? आम भगव-[12. B. P. 3. L. 2.]न्। भगवानाह—तेन हि वर्चकुटी नाम कर्त्तव्या। वर्चकुटी दानि भिक्षुणा कारापयमाणेन नापि क्षमति

---

१. Ms. उपादका।

२. Ms. ये।

३. Ms. द्राण°।

४. Ms. खज्जति।

५. Ms. येषु रेण।

६. Pali उच्चारं, cf. Vin. III 36; IV. 265-66, "उच्चारं नाम गूथो वुच्चति"।

७. Ms. उश्वासं। But, this term is used subsequently also.

८. Should be एतेषां।

विहारस्य पुरस्तिमेन वा उत्तरेण[1] वा कारापयितुं। अथ खलु दक्षिणेन वा पश्चिमेन वा कारापयितव्या। वातपथं मुक्त्वा मल्लतलका[2] खडा खणितव्या। प्रपातनिश्रितं वा। यदि वा खनिया उदकान्तिका भवति प्रथमं कल्पियकारेण ओह-[12. B. P. 3. L. 3.]यियापेतव्या[3]। अथ दानि प्रपातनिश्रिता वा उर्णाश्चघरं धोवति[4] गच्छति अन्तरां काष्ठं दातव्यं। यथा तहिं प्रथमं नियते य परमिलं वा चतुरस्रं वा निश्रितव्या। इष्टकाहि वा उपलैर्वा च्छादयितव्या। यानि सारणि च दृढानि च स्थूला च काष्ठानि तान्यधस्ता दातव्यानि। तत्र काष्ठेहि वा फलकेहि[5] वा ओहाटयितव्या। उपरि इष्ट[का]हि मृत्तिकाय [12. B. P. 3. L. 4.] च छादयितव्यानि। तच मुखानि कर्त्तव्यानि हस्ताभ्या आयामेन। निमुष्टकम्वा हस्तम्त्रिस्तरेण। तत्र काण्ठशारिणि कर्त्तव्या। कक्षमात्री वा गलमात्री वा वंशे [न] वा नलेन वा नंगलेहि वा फलकैर्वा[6] तथा कर्त्तव्या यथा उपविष्टा अन्योन्यं न पश्यन्ति। शीर्षान्तत्रो[7] परिच्छादेतव्यं। कुड्डं[8] उत्थपियाणं वलभी कारयितव्या। आकाशतलं वा लिपितव्या मृत्ति[12. B. P. 3. L. 5.]काय वा सुधाय वा। तृणच्छन्ना वा कर्त्तव्या। अपरस्मिन्पार्श्वे वर्चकुटीका कर्त्तव्या। तहिं स्थापेतव्या काष्ठकुण्डानि वा मृत्तिकाकुण्डानि वा उदकपूरितानि[9]। तहिं

१. Ms. उत्तारेण।
२. Ms. कठला, but cf. 12B. P.5. L6. P. 78.
३. Ms. ओह्.येया यातव्या।
४. Ms. उर्णोवच घखो बोवच्चि। Our reading also is not a happy one.
५. Ms. पालकेहि।
६. Ms. पाल°।
७. Ms. शीर्षान्तत्रो।
८. Ms. कुद्दु।
९. Ms. °पूरयितव्यानि।

स्थापेतव्यं करोषो मृत्तिका वा उषो वा ततो जानितव्यं। यदि ताव या खानिमा[1] वर्चकुटी भवति ततो वर्चकुम्भिका वाहिरोदिवा[2] कर्त्तव्या यथा तं उदकं अन्येन गच्छति। अथ [12. B. P. 3. L. 6.] दानि प्रपातनिश्रिता[3] भवति वर्चकुटी। किञ्चापि तर्हि येव[4] उदकं पतति। अनापत्तिः। वर्चकुम्भिकाये पुरतो कल्पियकरकि स्थापयितव्या उदकस्य पूरितानि तानि[5] कुण्डकानि वा कटाहकानि वा। नापि क्षमति अभ्युपेक्षितुं सप्राणकानि वा अधोतकानि वा। अथ खलु उद्दिशितव्यं नवकान्ते वा पटिपाटिकाय वा यस्य वा प्रापुणति। तेन तानि कुण्डकानि[6] कालेन कालं [12. B. P. 3. L. 7] पूरयितव्यानि। कालेन कालं धोवयितव्या[नि]। कालेन कालं आतपे शोषयितव्यानि। अथ तानि काष्ठमयानि भवन्ति न क्षमति आतपेन शोषयित्तुं। मा फुट्टेंसुत्ति[7]। शोषयित्वा च्छायायां[8] स्थापयितव्यानि। यं कालं परिशुष्कानि भवन्ति ततो पूरेतव्यानि। वर्चकुटीये पूरतो कुटी वा शाला वा कर्त्तव्या। तत्र चीवरवंशा[9] वा चीवरविसि[10] वा दीर्घ

१. Ms. साखानि मा। The reading is not clear but cf. 12A. P4. L4. P. 71.

२. Ms. वाहिरा दिवा।

३. Ms. °विस्रता।

४. Ms. तह्निप्येव।

५. Ms. पूर्णतानितानि, but cp. the last sentence in the same line.

६. Ms. कुण्डनिकानि।

७. Ms. प्रार्देसु; also प्रादुंसु; cf. 12B. P6. L3. our reading is not a happy one; Probably, Pali °पाद्रु [cp. Vedic पादुं+भु] open, visible, door etc.

८. Ms. °च्छातायां।

९. Ms. चीवरं वंशा।

१०. Ms. चीवरविशिषा।

नागदन्त वा कर्त्तव्याः। य-[12. A. P. 4. L. 1.]त्र भिक्षु कल्पिकानि चीवरकाणि विनिक्षिपिय वर्चकुटी प्रविशन्ति। नापि दानि द्रविडेन विय प्रस्रावकरणं गृह्णित्वा वर्चकूटिकां[1] गन्तव्यं। अथ दानि वर्चकुम्भिकां सप्राणका भवति न दानि [क्षमति] वक्तुं आयुष्मन्तो, सप्राणका वर्चकुम्भिका[2]। अथ खलु तृणम्वा तूलिका वा उपरि स्थापितव्या। यथाज्ञाये सप्राणकेत्य-भिज्ञानं। उदककृत्यं करेन्तेन न दानि झल्लझल्लाये[3] उदकं चेतव्यं। अथ ख-[12. A. P. 4. L. 2]लु मात्रा[4]येव चेतव्यं। रिक्तकां वर्चकुम्भिकां पश्यति न तथा[5] अध्युपेक्षितव्यं। यस्य ओहेय्यको[6] भवति तस्य आविक्षितव्यं[7] स्वयं वा पूरयितव्यं। अन्तमसतो कुम्भिकायं एकस्य [यत्तकं] पर्याप्तं[8] भवेया तत्तकं दातव्यं। अथ दानि ग्लानो भवति आर्षव्याधिकं वा प्रस्कन्दिकं[9] वा। लेङ्कटखण्डेहि वा भस्त्रायनंकेहि वा सुकुमारेहि दायितव्यं। एषैवार्थोत्पत्तिः।

भगवा-[12. A. P. 4. L. 3.]न् श्रावस्त्यां विहरति शास्ता देवा-नाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा अपरेण दानि भिक्षुणा वंशशला-काहि व्रणमुखं पोच्छितं। तस्य दानि[10] क्षतं सरुधिरं कृतं। एतं प्रकरणं

---

१. Ms. वर्चकुम्भिका।
२. Ms. °कुटिका।
३. Ms. कल्लकये।
४. Ms. माता।
५. Ms. तदा।
६. Ms. ओहेप्यको।
७. Ms. Probably आचिच्चि°; cf. Pali आचिक्खि°।
८. Ms. पर्यास्तं।
९. Ms. °न्दितं।
१०. Ms. पुनि।

भिक्षु भगवतः आरोचयेंसुः । भगवानाह—शब्दायथ भिक्षुं। सो दानि शब्दायितो। भगवानाह—एवं च त्वं वंश शलाकाहि व्रणमुखं पोच्छेसि[१] ? तेन हि न क्ष-[12. A. P. 4. L. 4.]मति वंशशलाकाहि कण्डविदलिकेन वा नलकाष्ठेन वा कठल्लेन वा अस्थिखण्डेन वा व्रणमुखं पोच्छितुं । अथ खलु अवलेखनं नाम कर्त्तव्यं ओलिका वा स्थापयितव्या। मृत्तिका[२]मया वत्तिका कर्त्तव्या। या खानिमा वर्चकुटी भवति। नापि क्षमति भिक्षुणा व्रणमुखं पोच्छयता तायो वत्तिकायो वा कुलिकायो वा वर्चकुटीये प्रक्षिपितुं। [12. A. P. 4. L. 5.] अथ खलु एकमन्ते कूटकं कर्त्तव्यं। तायो देवसिकं च्छोरयितव्यायो वा दहिय भूयो वा[३] थपयितव्यायो। अथ दानि भिक्षू पश्यति। को इमायो दहिष्यतीति। तायो च्छोरिय अन्यायो स्थापयितव्यायो। अथ दानि प्रपातनिश्रिता भवन्ति किंचापि तहिं अपलेखाम्वा प्रक्षिपति संकरं वा। अनापत्तिः। वर्चं[४] करंतेन त-[12. A. P. 4. L. 6.]था कर्त्तव्यं यथा उच्चार-प्रस्राव-खेट-सिंघाणकं सर्वं तहिं निगच्छे। अथ दानि अन्यो चौक्षीकृतं भवति ओहाणम्वा खेटं वा सिंहाणकम्वा वर्चं वा तहिं निक्षिप्तं भवति उच्चिकाये तहिं सर्वं प्रक्षिपितव्यं। नापि दानि क्षमति अकृत्वा उदककृत्यं सांघिकं शेय्यासनं परिभुञ्जितुं ॥३॥ एषा एवार्थोत्पत्तिः ।

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणां [12. A. P. 4. L. 7.] च विस्तरेण निदानं कृत्वा अपरो दानि भिक्षुः

१. Ms. पिच्छिसि।

२. Ms. सुत्तिका।

३. The last seven letters repeated.

४. Ms. वर्चं ।

उश्वासे उत्पीडितो[१] निवसनं ओगुहिय वर्चकुटीं प्रविशति। तहिं च अपरो भिक्षुः पूर्वप्रविष्टो। सोदानाह—मामे आयुष्मं, ओहयेसि। एतं प्रकरणं भिक्षुः भगवतो आरोचयेंसुः। भगवानाह—तेन हि[२] एवं वर्चं प्रतिपद्यितव्यं। किन्तिदानि एवं वर्चं प्रतिपद्यितव्यं? नायं ताव क्षमति भिक्षुणा वक्तुं [12. B. P. 4. L. 1.] याव उश्वासेन उत्पीडितोति। अथ खलु समुदाचारमात्रकेणैव वर्चकुटीं गन्तव्यो। अथ दानि भिक्षुः उश्वासेन सहसा उत्पीडितो[४] [भवति] न क्षमति निवासनं ओगुहिय अशब्दकर्णिकाये वर्चकुटी प्रविशितुं।

अथ खलु अच्छटिका करन्तेन[५] प्रविशितव्यं। यदि ताव तहिं[६] कोचि पूर्वप्रविष्टो भवति तेन प्रत्यच्छटिका कर्त्तव्या। इमिना आगमयितव्यं[७] ताव। याव उत्थित इति। अथ दानि [12. B. P. 4. L. 2.] उत्पडितो[८] भवति अच्छटिकां करन्तेन अल्लीपितव्यं। इमिना च पराङ्मुखेन भवितव्यं। तस्य चावकाशो दातव्यः। तेन च पराङ्मुखेन उपविशितव्यं[९]। अन्तरं दातव्यः। नापि दानि दूरतो येव निवास[नं] ओगुहिय उपवेष्टव्यं।

---

१. Ms. उद्दीपितो; cf. next line

२. Ms. ते वहि।

३. Ms. क्षमयितुं; is daubtful here. cf. 12A. P4. L6.

४. Ms. उप्पडि।

५. Ms. कर तेन। cf. the next line.

६. Ms. तात वहिं।

७. Ms. आगमितव्यं।

८. Ms. उप्पीडितो।

९. Ms. उवि।

अथ खलु समनन्तरं उपविशितव्यं च निवासनं निगुहितव्यं च। नापि दानि क्षमति वर्चकुटीयं उपविष्टेन ध्यानान्तरगतेन वा सिद्धान्तरगतेन[1] वा उ-[12. B. P. 4. L. 3.]द्देशं वा स्वाध्यायम्वा मनसिकरेन्तेन आसितुं। अथ खलु समुदाचारं करिय उत्थिय च्छुत्ति गन्तव्यं[2]। नापि क्षमति सांघिकेन शेय्यासनेन प्रावृतेन वर्चकुटीं प्रविशितुं। नापि क्षमति कल्पिकेहि चीवरेहि प्रावृतेहि वर्चकुटीं प्रविशितुं। अथ खलु स्थापयितत्वा प्रवेष्टव्यं। नापि दानि क्षमति दन्तकाष्ठं खादन्तेन वर्चकुटीं प्र-[12. B. P. 4. L. 4.]वेष्टुं। एकान्तेन निक्षिपित्वा प्रवेष्टव्यं। नापि क्षमति ओगुण्ठितशीर्षेण वा ओहयितहस्तेन वा वर्चकुटीं प्रवेष्टुं। अथ खलु एकांसीकृतेन प्रवेष्टव्यं। एषो भिक्षुः पुरिमे वा पश्चिमे वा प्रहाणे[3] उपविष्टो समुदाचारकृतो[4] भवति। प्रहाणस्य आमन्त्रियाण च्छुत्ति वर्चकुटीयं गन्तव्यं। अथ दानि भिक्षू उत्पीडितो भवति नापि क्षमति [12. B. P. 4. L. 5.] यथा उष्ट्रेण वा गोणेन[5] वा गर्दभेन वा उरूयो ओहयन्तेन गच्छितुं। अथ खलु संघारामस्य एकहिं अन्ते उपविशितव्यं। अथ दानि भिक्षुणा दृष्टो भवति। नापि क्षमति वक्तुं को वा एषो कथं वा एषो मा वेदो भवेयन्ति[6]। तेन उश्वासं करन्तेन मल्लकेन वा कोडितेन वा च्छोरयितव्यं। च्छोरियाण सो पृथिवी प्रदेशो गोमये-[12. A. P. 4.-L. 6.]न उद्वर्त्तितव्यं[7]। ततो यदि तात्र विभवो भवति तैलकार्पी वा

---

१. Ms. सिद्धा°।

२. Ms. °भन्तव्यं; cf. next line.

३. Ms. प्रहाणी।

४. Ms. समुदार°।

५. Ms. शोणेन।

६. Ms. The last seven letters not clear.

७. Also उद्वर्त्तयितव्यं in the next line.

गन्धकार्षी वा दातव्या । अथ दानि विभवो न भवति अन्तमसतो गोमयकार्षी वा दातव्याः ।

एषो भिक्षुः चेतियं वन्दितो उश्वासकृतो भवति समुदाचारमात्रकेनैव निर्धावितव्यं । अथ दानि सहसा उत्पीडितो भवति तदा न क्षमति उष्ट्रेण वा गोणेन वा उरूयो ओहयन्तेन गन्तुं । अथ [12. B. P. 4. L.7.] खलु एकमन्ते निवास[नं] ओहिय उपविशितव्यं । अथ दानि भिक्षूहि दृष्टो भवति तदा न क्षमति वक्तुं को वा एषो कथं वा एषो मा वेदो भवेयन्ति । तेनापि दानि उश्वासं करिय मल्लकेन वा कोडितेन[१] वा कठल्लेन वा छोडियाण सो पृथिवी प्रदेशो गोमयेन उद्वर्त्तितव्यो । यदि ताव आहत्या पृथिवी भवति उत्तत्थापितव्या । कृतकर्मा पृथिवी भवति उदकेन धोवित-[12. A. P. 5.-L. 1.]व्यं । यदि ताव विभवो भवति चेतियघरे तैलकार्षी वा दातव्या । अथ दानि न विभवो भवति अन्तमसतो तम्हि पृथिवी प्रदेशे गन्धकार्षी वा दातव्या । अथ दानि आरण्यकं शेय्यासनं भवति दुर्लभो गन्धा अन्तमसतो तैलकार्षी दातव्या । एते द्वे भिक्षू चेतियं[३] वन्दन्ति[४] । यं पश्यन्ति तत्र शुनखेन वा शृगालेन वा उश्वासं कृतकं । यो नवको भवति ते-[12. A. P. 5. L. 2.]न च्छोरितव्यं । अथ दानि नवतरको शैथिलिको बाहुलिको[५] भवति वृद्धतरेण च्छोरितव्यं ।

---

१. Ms. कोडिल्लेन ।

२. Ms. तं हि ।

३. Ms. भिक्षुणा तियं ।

४. Ms. वन्दते ।

५. Ms. वाह्नलिको । cf. 12B. P5. L3.

एते द्वे भिक्षु[णी]गोचरं प्रविशन्ति । प्रकृत्येव अवच्छन्दियितव्यं । अथ दानि भिक्षुः ओप्रविष्टो समानो समुदाचारं कृतो भवति । किं कर्त्तव्यं ? ग्रामान्तिकं शेय्यासनं गन्तव्यं । प्रतिक्रमणं आगन्तव्यं[१] । नापि चमति भिक्षुणी उपाश्रये गतागतस्य वर्चकुटीं प्रविशितुं । अनेकाये [12. A. P. 5.-L. 3.] भिक्षुणिका उपविष्टा भवेय[२] । अथ खलु पृच्छितव्यं--भगिनि, किं रिक्ता वा वर्चकुटी नेति । नापि चमति तरुणिका पृच्छितुं मा वेणो[३] भवेयन्ति । अथ खलु वृद्धा पृच्छितव्या । यदि तावदाह—आर्य, रिक्ता वर्चकुटीति । कनकेन[४] वा दकानकेन वा उदकं गृह्णिय प्रविशितव्यं । उश्वासं करिय उदककृत्यं करिय गन्तव्यं । अथ दानि एवं पि न भवति नी-[12. A.-P. 5. L. 4.]ल मश्वं गन्तव्यं । नापि दानि चमति स्त्रीणां निलमश्वं[५] गन्तुं । अथ खलु यो पुरूषाणं नीलमश्वो तहिं गन्तव्यं । नीलमश्वो न भवति उत्सृष्ट[६] गृहं गन्तव्यं । पृच्छितव्यं—रिक्तो उच्चरोति ? न दानि तरुणिका स्त्री पृच्छितव्या । मा अप्रहासं देया । महल्लिका[७] पृच्छितव्या । यदि तावदाह रिक्तो । उदकदकानका आदाय प्रवेष्टव्यं । एवं पि न भवति शून्य-[12. A. P. 5. L. 5.]घरं वा जम्वालम्वा भवति तहिं गन्तव्यं । न दानि तहिं गन्तव्यं[८] । न दानि तहिं अतिनिशब्दप्रदेशे[९] उपवेष्टव्यं । मा

---

१. Probably आगमयितव्यं ।

२. Should be भवेय्युं ।

३. Ms. वेयणो ( or वेदो ? ), the meaning is not clear to us.

४. Probably कुण्ड ।

५. Ms. निगमश्व ।

६. Ms. उन्मृष्ट ।

७. Ms. महन्तिका ।

८. Usefulness of this sentence is doubtful.

९. °प्रवेशे ।

उर्गकितो भवेयं छुन्न प्रदेशे[1] उपवेष्टव्यं । अथ दानि एवं पि न भवति उल्लिप्त रथ्यायां कुड्यं[2] पृष्ठतो कृत्वा उश्वासो कर्त्तव्यो । ,योसौ द्वितीयो सहायो भवति तेन पुरतो पराङ्मुखेन स्थातव्यं ।

एते भिक्षू[3] सार्थेन सा-[12. A. P. 5. L. 6.]र्द्धमध्वानं गच्छन्ति । भिक्षु उश्वासितो भवति नापि क्षमति पत्थेस्मिं[4] उश्वासं कर्त्तुं । मा [जनो] ओध्यायेंसु केनिमं पन्थेस्मिं[5] अन्त्राणि विकीर्णानि । अथ खलु[6] एकतमं ज्वाटम्वा वृत्तं वा पृष्ठवो करियाणं उपविशितव्यं । नापि दानि अनुवातं कर्त्तव्यं । मा सर्वसार्थं गन्धेन व्यावहेय्या । अपवातं कर्त्तव्यं । सार्थे निसृष्टस्मिं[7] समुदाचारो भवति । एकान्ते उपविशिय कर्त्त-[12. A. P. 5. L. 7.]व्यं । नापि दानि अप्रतिसंविदितेन उत्थत्तितव्यं[8] । मा चोरो वा आचोरको वाति[9] हन्येया । नापि दानि अनुवातं कर्त्तव्यं । या सर्वसार्थो[10] गन्धेन व्या-वहेय्या[11] अपवातं कर्त्तव्यं । नापि दानि क्षमति प्रतिक्रुत्येत्र निवासनं

---

१. Ms. प्रवेशे° ।

२. Ms. कुठ्यं ।

३. Ms. भिक्षु ।

४. Ms. यत्थेस्मिं ।

५. Ms. " ।

६. Ms. खल ।

७. Ms. सार्थेन पृष्ठस्मि ।

८. Ms. उयच्चितव्यं ।

९. Ms. वान्ति ।

१०. Ms. °सान्थो ।

११. Ms. यावहेया ।

ओगुहिय गच्छितुं[1]। अथ खलु निवासनं[2] ओगुहितव्यं च उपविशितव्यं च। न च्चमति निवासनं ओगुहिय वामेन हस्तेन अङ्गजातं[3] गृ-[12. B-P. 5. L. 1.]ह्यि[4] द्रवितेन यथा उदकसमीपे[5] गन्तुं। अथ खलु उत्थि-हितव्यं[6] च निवासनं ओसरितव्यं [च]।

नावाये गच्छन्तस्य समुदाचारो भवति। यदि वर्चकुटी भवति तर्हि[7] कर्त्तव्यं। काष्ठकं अन्तरा कर्त्तव्या। यथा तर्हि प्रथमं निपतेया। एवं न भवति अन्तमसतो स्त्रका अङ्गुलि उपथपितव्या। वर्चकुटी न भवति कटाहेन वा मल्लिकेन वा उज्भितव्यं।

स्तूपाभिगृहे [वा] संघाभिगृहे वा प-[12. B. P. 5. L. 2.]श्यति। उज्भितव्यं। अथ दानि द्वे चंक्रमन्ति वृद्धतरको [च] नवतरको च। नवकेन उज्भितव्यं। अथ दानि सो भवति शैथिलिको वा वाहुलिको वा आवट्टको वा अशिक्षाकामो वा[8] तदा स्वयं उज्भितव्यं। एषो हि भिक्षुः दीर्घकेन खायितको भवति। वैद्यो जल्पति—तन्ते[9] महाविकटा पायेथत्ति। किं कर्त्तव्यं? यदि ताव आत्मनो उच्चारो[10] भवति सो एव तस्य प्रतिग्रहो।

१. Ms. गच्छिन्तं।
२. Ms. विवासनं।
३. Ms; अङ्गं जातं।
४. Ms. गृह्येय।
५. Ms. समीय।
६. Ms. उच्छि°।
७. Ms. तहि।
८. Ms. °कामोभ।
९. We wonder if it is भन्ते।
१०. At least this instance proves that उच्चारो of Pali source is totally not ignored though mostly it is termed as उच्चासो।

अथ [12. B. P. 5 L.3.] दानि परकेरको[1] उच्चारो भवति प्रतिग्रहापयितव्यो उदकेन उच्चावियदन्येन वस्त्रकेन[2] परिस्रावियं तस्य भिक्षुस्य सुमना [प्र]फुल्लानि न शक्ये ददियाणं वक्तव्यं—आयुष्मन्, इमस्य भैषज्यस्य गन्धो यादृशो उच्चारस्य। मा खलु ते अमनापं[3] भविष्यति। पिवाहि[4] यदि[5] जीवितुकामोसि[6]। एवं सर्वेहि सर्वे प्रतिपधितव्यं। न प्रतिपद्यति अभि [12. B. P. 5. L. 4.]समाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यांविहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा ते दानि भिक्षुः प्रकीर्णकं प्रश्वासं करोन्ति। जनो दानि ओध्यायन्ति। पश्यथ भणे, [इमे] श्रमणका। यथा उष्ट्रा वा गोणा वा गर्दभा वा छगलका वा एवं इमे[7] श्रमणका प्रकीर्णकं प्रश्वासं करोन्ति। नष्टं भ्रष्टं कु[12. B. P. 5. L. 5.]तो वा इमेषां श्रामण्यं। एतं प्रकरणं भिक्षुहि श्रुतं। भिक्षु भगवतो आरोचयेंसु। भगवानाह—सत्यं भिक्षवो, जनो ओध्यायति? तेन हिं प्रश्वासकुटी नाम कर्त्तव्या। प्रश्वासकुटीये दानि भिक्षुणा कारयन्तेन न क्षमति विहारस्य उत्तरेण [वा] पूर्वेण [वा] कारापयितुं। अथ खलु दक्षिणेन वा पश्चिमेन वा कारापयितव्या वातपथमुक्त्वा। [12. B. ,P. 5. L. 6.] उदकश्रमणस्य वा उपरि कर्त्तव्या। उपलस्य वा इष्टकाय वा उपरि मल्लतलका खन्नां[8] खनितव्या। मध्ये च्छिद्रकं कर्त्तव्यं।

---

१. Probably परकीयको।
२. Ms. उच्चावियदानेन नच्चकेन।
३. Ms. अमनायं।
४. Ms. ये वाहिय।
५. Ms. यदेशे।
६. Ms. जीवित कामो; But cf. 12A. P7. L5.
७. Ms. एव मे।
८. In p. 68, it is खत्रा।

उदकभ्रमणस्य उपरि थपेतव्या । सुधाय समन्तेन[1] लिपितव्या । तथा[1A] समन्तेन सेतुः कर्त्तव्यो यथा पतंतो[2] येव प्रस्रवासको बाह्येन निर्गच्छति । धोविय तैलेन प्रचयितव्या[3] नवकान्तेन वा उद्दिष्टकेन वा पटिपाटिकायेन वा यस्य [12. B. P. 5. L. 7.] वा प्रापुणेति ॥३॥ एषा एवार्थोत्पत्तिः ।

भगवान् श्रावस्त्याम्विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा अपरो दानि भिक्षुः प्रहाणं उपविष्टको प्रश्वासेन उत्पीडितो[4] प्रश्वासकुटीं गच्छियाणं निवासनं ओहियाणं प्रश्वासं करिष्यन्ति । तहिं च भिक्षुः पूर्वप्रविष्टो प्रश्वासं करोति । सो जल्पति—मा[5] खलु मे आयुष्मन्, ओमूत्रयसित्ति[6] । एतं [12. A. P. 6. L. 1.] प्रकरणं भिक्षुहि श्रुतं । भिक्षु भगवतो आरोचयेंसु । तेन हि एवं प्रश्वासे प्रतिपद्यितव्यं । एवं ताव न क्षमति भिक्षुणा आगमयितुं याव प्रस्रवासेन प्रपीडितो भवति । अथ खलु समुदाचारमात्रकेनैव प्रश्वासकुटीं गन्तव्यं । नापि दानि क्षमति अशब्दकर्णिकाये प्रश्वासकुटीं प्रविशितुं । अथ खलु अच्छटिकां करन्तेन प्रश्वासकुटिं प्रविशितव्यं । य-[12. A. P. 6. L. 3.]दि तहिं[8] कोचि पूर्वप्रविष्टो तेन प्रत्यच्छटिका कर्त्तव्या । इमिना ताव आगमितव्यं याव प्रश्वासो कृतो । अथ दानि सो भिक्षुः उत्पीडियती[9] येव अच्छटिकां करन्तेन अल्लीपितव्यं ।

---

१. Ms. सुवायसमं तेन ।
१A. यदि ।
२. Ms. यतको ।
३. Ms. प्रच° ।
४. Ms. उप्पी° ।
५. Ms. सा ।
६. Ms. ओसुत्रयस्यित्ति ।
७. Ms. प्रश्वासि ।
८. Ms. तहें ।
९. Ms. उप्पी° ।

इमिना अवकाशो दातव्यो । ततो उभयोहि प्रश्वासो कर्त्तव्यो । नापि दानि क्षमति ओगुण्ठितशीर्षेण वा ओहितहस्ते[न] वा दन्तकाष्ठं खादन्तेन [वा]- उपवेष्टुं[१] । अथ खलु एकांशकृतेन एका-[12 A. P. 6. L. 3.]न्ते दन्तकाष्ठं स्थापयित्वा उपवेष्टव्यं । नापि दानि तहिं ध्यानान्तरेण वा स्वाध्यायम्वा करेन्तेन अशुभसमापत्तिम्वा[२] समापन्नेन आसितव्यं । अथ खलुप्रस्रावं[३] कृत्वा च्छुत्ति उत्थितव्यं । एषो दानि भिक्षुः प्रहाणे[४] उपविष्टको प्रश्वासकृतो भवति उत्थियाणं प्रश्वासकुटीं गन्तव्यो[५] । अथ दानि प्रश्वासेन उत्पीडितो[६] भवति । [ न क्षमति ] यथा उष्ट्रेण [वा] [12. A. P. 6. L. 4.] गोणेन वा गर्दभेन वा उरूयो ओमुत्रियन्तेन गन्तुं । अथ खलु एकतमंते[७] उपविशिय प्रश्वासो कर्त्तव्यो । अथ दानि केनचि भिक्षुणा दृष्टो । नापि दानि क्षमति वक्तुं को वा एषो कथम्वा एषो मा वेदो[८] भवेयन्ति । तेनापि दानि[९] प्रश्वासं करियाण सो पृथिवी प्रदेशो यदि तावदाहत्या पृथिवी भवति काष्ठेन वा कठल्लेन[१०] वा उत्तत्थिया-[12. A. P. 6. L. 5.]णं च्छोरयितव्यो । अथ दानि कृत- कर्मा पृथिवी भवति धोवयितव्या । ततो तैलकार्पी वा गन्धकार्पी वा

---

१. Ms. उपवेपुं ।

२. Ms. अश्रुत° ।

३. This should be noted as against the frequent use of the corrupt term of प्रश्वास ( Pali, पस्साव ) ।

४. Ms. प्रहाण ।

५. Ms. गन्तव्या ।

६. Ms. उप्पी° ।

७. In all probability the term is used for एकमन्ते ।

८. Ms. वेद्दो ।

९. Ms. यानि ।

१०. Ms. कपल्लेन ।

दातव्या। अथ दानि नास्ति विभवो अन्तमसतो गोमयकार्षी दातव्या। अथ दानि प्रश्वासकुटी न भवति एकस्मिं कोणे सर्वसंघस्य प्रश्वासघटे[1] स्थापयितव्यो तस्योपरि[2] छिद्रमल्लका दातव्यं मा अप्रकृतिका घटस्य वा बाह्येन प्रश्वा-[12. A. P. 6 L.6.]सं[3] छोरेयाति[4]। तत्र कुन्तको[5] अलाबू ओतम्बको[5A] वा थपयितव्यो। तहिं[6] प्रश्वासं करियाण घटके प्रक्षिपितव्यं। न दानि तहिं[7] क्षमति उच्चारो वा खेटसिंघाणको वा प्रक्षिपितुं। सो दानि उज्झितव्यो नवकान्तेन कायस्य वा ओहेय्यको भवति। नापि दानि क्षमति अत्यागमे प्रदेशे उज्झितुं[8]। सर्वसंघस्य मा गन्धेन व्यावहेय्या। अथ दानि द्विभूमको[9] भवति द्वितीयायां [12. A. P. 6. L. 7] भूमियं तथा येव घटको स्थापयितव्यो। त्रिभूमको[10] भवति तृतीयायां भूमौ तथाय्येव[11] स्थापयितव्यं। तहिं प्रश्वासं करितव्यं कल्पिकं। यं कालं प्रहाणस्य यथासुखं कृतं भवति तं कालं प्रश्वासघटिका निकाल–

---

१. Ms. °पटे।
२. Ms. तस्योदरि।
३. Ms. प्रश्वासं।
४. Ms. छोरियानि।
५. Ms. तत्रको। cf. 12B. P6. L3.
५A. P. 82, अलाबुतुम्बको। ओ seems to be a superfluous one. cf. Ibid.
६. Ms. तहें।
७. Ms. तहि।
८. Ms. उज्फेतुं।
९. Ms. द्विरमका।
१०. Ms. तृभूमिको।
११. Ms. तथाप्येव।

यितव्या। केनायं निकालयितव्यो ? नवकान्तेन वा पटिपाटिकाय वा यस्य वा प्रापुणाति । ततो पि न क्षमति सो तहिं छोरयितुं यहिं देवे व-[12. B. P. 6. 1.]र्षेन्तस्य[१] स्तूपविग्रहं[२] वा संघविग्रहं वा गच्छति। अथ खलु तहिं छोरयितव्यं यहिं देवे वर्षन्तेन अन्ये न गच्छति। नापि क्षमति प्रश्वासघटं अभिनिकुब्जे प्रदेशे स्थापयितुं मा अन्ये भिक्षू तं[३] पश्येंसु। नापि क्षमति अति प्राकटे प्रदेशे स्थापयितुं मा नं ढोस्सा वा विडा वा वातपुत्रा वा भुंजेंसु। अथ खलु प्रच्छन्नप्राकटे[४] स्थापयितव्यं। विकाले प्रवेशियाणं तहिं य्येव [12. B. P. 6. L. 2.] स्थाने स्थापयितव्यो। घटस्योपरि छिद्रमल्लकं स्थापयितव्यं! छिद्रमल्लकस्योपरि कुन्तको वा अलावुतुम्बको वा थापयितव्यो। अथ दानि संघे प्रश्वासघटो न भवति पौद्गलिकपौद्गलिकानि प्रश्वासघटिकानि स्थापयितव्यानि। घटिका वा कारका वा अलावुतुम्बुका[५] वा। कल्यतो एव प्रश्वासं एकमन्ते विसर्जिय प्रश्वासभण्डकं धोविय[६] प्रतिगुप्ते [12. B. P. 6. L. 3.] प्रदेशे आतपे स्थापयितव्यं। ततो विकाले भूयो प्रवेशितव्यो। कृतको भवति एवं य्येव कर्त्तव्यं। तुच्छकं भवति कल्यतो येव उज्झित्वा छन्ने[७] स्थवितव्यं। मा फुट्टेन्सु शिक्तेन उच्चिनित्वा स्थापयितव्यं । मल्लकं भवति एकान्ते उज्झित्वा धोवित्वा[८] आतपे स्थापयितव्यं। सायं प्रवेशेन्तेन कुन्त वा तुम्बका वा शिच्चे

---

१. Ms. रर्षेन्तस्य।
२. Ms. यूप°।
३. Ms. न।
४. Should be प्रदेशे, but the reading is very clear.
५. Also °तुम्बक, cf. 12B. P6. L3. and 12A. P6. L7.
६. Ms. वोधिय।
७. Ms. छन्ना।
८. Ms. धैवित्वा।

उच्चिनित्वा मञ्चकस्थाने। उल्लपितव्यं ओरू-[12. B. P. 6. L. 4.] हन्तेन मल्लकं घटिका वा मञ्चकस्य च ओरुहन्तेन[१] सुस्थपिता कर्त्तव्या। भाजनं न भवति वर्षा उदकं च भवति न दानि तथा प्रस्रावो कर्त्तव्यो[२] यथा चेतियाभिगृहं उपरिघंश्वतो गच्छिय[३] एकान्तके कर्त्तव्यं। अग्निशालायाम्वा उपस्थानशालांयम्वा उपविष्टस्य समुदाचारो:भवति। छुत्ति निष्क्रमितव्यं। अथ दानि उप्पिलितो[४] भवति उक्कन्त-[12. B. P. 6. L. 5.]था येने विय सूत्रेण सिञ्चन्तेन न गन्तव्यं। अथ खलु एकान्तेन कृत्वा उज्झितव्यं। तैलकार्पी[५] दातव्या। अन्तमसतो गोमयकार्पी दातव्या। एषो भिक्षु चेतियं वन्दन्तो[६] प्रश्वासकृतो भवति समु[दा]चारमात्रकेण एव गन्तव्यं। अथ दानि भिक्षू सुष्टु उप्पीलितो[७] भवति नापि क्षमति यथा उष्ट्रेण[८] वा गोणेन[९] वा उरूयो ओमूत्रन्तेन गन्तुं। अथ [12. B. P. 6. L. 6.] खलु एकमन्तेन प्रश्वासो कर्त्तव्यो। अथ दानि कोचि भिक्षु पश्यति नायं वक्तव्यो को एषो किम्वा कथम्वा एतं ति। मा वेदो भवेयन्ति। तेनापि प्रश्वासं करियाणं यदि ताव आहत्या पृथिवी भवति काष्ठेन वा कठल्लेन वा उत्तच्छिय च्छोरयितव्यं।

---

१. Ms. चतुरुहन्तेन।
२. Ms. वर्त्तव्यो।
३. Ms. घश्वतो गच्छेय।
४. Ms. उप्येलितो, but mostly उत्पीडितो।
५. Ms. °कार्पा।
६. Ms. वदन्तो।
७. Should be उत्पीडितो।
८. Ms. उष्पेन।
९. Ms. शोणेन।

अथ दानि कृतकर्मा पृथिवी भवति धोवितव्या। सर्वत्र चेतियं–गृहे[१] गन्धकार्षी वा तैलकार्षी वा दातव्या। अथ दानि विभवो[२] न [12. B. P. 6. L. 7.] भवति अन्तमसतो तर्हि पृथिवीप्रदेशे तैलकार्षी वा गन्धकार्षी वा दातव्या। अथ दानि आरण्यकं शेय्यासनं भवति दुर्लभो गन्धो अन्तमसतो तैलकार्षी वा दातव्या। एषो भिक्षुः गोचरं प्रविशति प्रकृत्येव ताव प्रश्वासं करिय प्रविशितव्यं। अथ दानि भिक्षुः गोचरं प्रविष्टः प्रश्वासकृतो भवति। नापि क्षमति अत्यागमे प्रदेशे प्रश्वासं कर्त्तुं। अथ ख-[12. A. P. 7. L. 1.]लु या उक्षिप्तरथ्या भवति तुण्डरथ्या तर्हि गन्तव्यं। कुण्डं[३] अग्रतो करियाण प्रश्वासो कर्त्तव्यो। यो सो[४] द्वितीयो सहायो भवति तेन पृष्ठतो स्थातव्यं पराङ्मुखेन।

एषो भिक्षुः सार्थेन सार्द्धमध्वानं[५] गच्छति। प्रश्वासिकृतो[६] भवति। नापि क्षमति पन्थेस्मिं[७] प्रश्वासं कर्त्तुं। मा जनो ओध्याये केन इमे[८] पन्थे प्रश्वासो कृतो ? रुधिरं विय च्छन्दितुं। अथ खलु एकान्ते प्रश्वासो कर्त्तव्यो [12. A. P. 7. L. 2.] पन्थातो उस्सारिय एकान्ते कर्त्तव्यं। नापि दानि क्षमति अनुवातं कर्त्तुं। मा सार्थो गन्धेन व्यावहेया। अपवातं कर्त्तव्यं। अथ दानि सार्थे सनिविष्टे समुदा[चा]रो भवति एकान्ते उच्चत्तिय कर्त्तव्यं।

---

१. Ms. चेतियां गृहे।
२. Ms. यभवो।
३. Ms. कुण्ड।
४. Ms. से।
५. Ms. समान। but cf. 12A. P5. L1. 6 & 7.
६. Ms. प्रश्वासकृतो। cf. Ibid.
७. Ms. यन्तिस्मि।
८. or केनिमे, but Ms. किपु कमे। cf. Ibid.

न दानि अप्रतिसंविदितेन उच्चत्तितव्यं। मा चोरो ओचोरको वेति हन्येया। अथ खलु संविदितेन उच्चत्तितव्यं। नापि दानि अनुवर्तितव्यं। अपवातं कर्त्तव्यं।

नावायै[1] [12. A. P. 7. L. 3.] गच्छन्तस्त समु[दा]चारो भवति। यदि वर्चकुटी भवति तहिं कर्त्तव्यं। अथ दानि वर्चकुटी न भवति भाजने कृत्वा उज्झितव्यं। अथ दानि ग्लानो भिक्षुः पाण्डुरोगेण। वैद्यो जल्पति—भञ्जेन्तं[2] प्रतिमूत्रं[3] पिवनाय देथेत्ति। किं कर्त्तव्यं? यदि ताव आत्मनको प्रश्वासो भवति पूरिमपश्चिमकं च वर्जयित्वा मध्यमं गृह्णितव्यो। सो एव तस्य[4] प्रतिग्रहो। [12. A. P. 7. L. 4.] अथ दानि अन्यातकं भवति पूरिमपश्चिमकञ्च वर्जयित्वा[5] गृह्णितव्यं। ततः पश्चात्प्रतिग्राहयितव्यं। तस्य ग्लानस्य सुमना [प्र]फुल्ला[6] [न] शक्ये[7] ददियाणं वक्तव्यं—इमं खलु बुद्ध प्रज्ञप्तं भैषज्यं। पिव यदि जीवितुकामोसि। एवं प्रश्वासे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति।

भगवान् श्रावस्त्यां विह[12. A. P. 7. L. 5.]रति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा अपरेण दानि भिक्षुणा सांघिकायं

---

१. Ms. ना वारि।
२. Probably it is भन्तेतं (भन्ते + एतं), Also cf. 12B. P5. L3.
३. Should be पूतिमुत्रं, Pali, पूतिमुत्तं।
४. In the whole sentence only प्रतिग्रह (not ग्रहो) in legible. Others are restored from 12B. P5. L2.
५. Ms. वर्ज्यं कृत्वा।
६. Ms. प्राह्लं।
७. Ms. नक्के। cf. 12B. P5. L4.

भूमौ आम्रपोतको रोपितको। सो दानि तं उन्नेति वर्धेत्ति[1] घटसिक्तको[2] एकपुत्रको विय। अपरेण भिक्षुणा आगच्छिय उप्पाडिय दन्तकाष्ठं खायितं। सो दानि तेन दृष्टो। सो दानाह—आयुष्मन्, एवं च दानि त्वं मम आ-[12. A. P. 7. L. 6]म्रपोतको घटसिक्तको[3] एकपुत्रकं विय संवर्धितं[4] उप्पाडिय दन्तकाष्ठं खादसि। एतं प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ तं भिक्षू। सो दानि शब्दापितो। भगवानाह—सत्यं भिक्षु, एवं नाम अपरेण भिक्षुणा सांघिकायां भूमौ आम्रपोतको रोपितो। सो दानि तेन उन्नीतो वर्धितो घटसिक्तको एक-पुत्र-[12. A. P. 7. L. 7.]को विय। त्वया सो आगच्छिय[5] उप्पाडिय भञ्जिय दन्तकाष्ठं खादितं? आह—आम भगवन्[6]। भगवानाह—एवं नाम त्वं पुष्पोपगतं[7] वृक्षं उप्पाडिय दन्तकाष्ठं खादसि? तेन हि न क्षमति दन्त-काष्ठं ॥३॥ एषा एवार्थोत्पत्तिः।

भगवान् श्रावस्त्यां विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा भगवान्महतीये वालाकिनीये भिक्षुपर्षाये[8] धर्मन्देशय-[12. B. P. 7. L. 1.]ति। ते दानि भिक्षू दन्तकाष्ठं न खादन्ता एकान्ते निषण्णा आसन्ति। प्रवातगन्धिकेन मुखेन पश्यन्ति। मा सब्रह्मचारिं गन्धेन

---

१. Ms. वद्धेति।
२. Ms. घटसिक्कको।
३. Ms. घटसिक्कको।
४. Ms. संवर्धितव्यं।
५. Ms. अग॰।
६. Ms. भगवं।
७. Ms. पुप्योयशतं।
८. Ms. पर्षाये।

न्यावहिष्यामः। भगवान् जानन्तो येव पृच्छति--किं एते भिक्षवो, भिक्षू एकान्ते आसन्ति ? कलहितका विय मन्ये। भिक्षू आहंसु--भगवता दन्तकाष्ठं प्रतिक्षिप्तं। ततो एते भिक्षवो एकान्ते आसन्ति प्रवातगन्धिकेन मुखेन पश्यन्ति। मा सब्रह्मचा-[12. B. P. 7. L. 2.]री गन्धेन न्यावहिष्यामः। भगवानाह--तेन हि अनुजानामि दन्तकाष्ठं प्रमाणिकं। महान्तं षोडशाङ्गुलं॥ एषैवार्थोत्पत्तिः।

भगवान् श्रावस्त्यां विहरति। ते दानि आयुष्मन्तो नन्दनोपनन्दना सवल्लरिकानि दन्तकाष्ठानि खादन्ति। जनो दानि ओध्यायन्ति। पश्यथ भणे, श्रमणकाः यथा कुमारका वा धर्मिष्ठा वा अक्षदर्शा वा गणका[१] [वा] महामत्रा वा। एवमिमे[२] श्र-[12. B. P. 7. L. 3.]मणकाः सवल्लरिकानि दन्तकाष्ठानि खादन्ति। नष्टं भ्रष्टं। कुतो इमेषां श्रामण्यं। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह--शब्दाययथ नन्दनोपनन्दनां। ते दानि शब्दापिता। भगवानाह--सत्यं भिक्षवो नन्दोपनन्दना, एवं नाम यूयं सवल्लरिकानि दन्तकाष्ठानि खादथ ? जनो दानि ओध्यायति। पश्यथ भणे, श्रमणका यथा [12. B. P. 7. L. 4.] कुमारका वा धर्मिष्ठा वा गणका वा राजपुत्रा[३] वा। इमे श्रमणकाः सवल्लरिकानि दन्तकाष्ठानि खादन्ति। नष्टं भ्रष्टं। कुतो इमेषां श्रामण्यं। आहंसु--आम भगवन्। भगवानाह--एवं च दानि यूयं अप्रमानानि दन्तकाष्ठानि खादथ। तेन हि प्रमाणिकं दन्तकाष्ठं खादयितव्यं। दन्तकाष्ठानि नाम त्रिणि--ज्येष्ठं मध्यमं कनीयसं। ज्येष्ठं

---

१. Ms. गणवा।

२. Ms, एकभिमे।

३. In the last line it is महामात्रा।

नाम षोडशाङ्गु-[12. B. P. 7. L. 5.]लानि। मध्यमं द्वादशाङ्गुलानि। कनीयसमष्टाङ्गुलानि ॥३॥

भगवान् श्रावस्त्याम्विहरति। विस्तरेण निदानं कृत्वा अपरो दानि भिक्षु दन्तकाष्ठं खादति। तेन दानि खादन्तेन दन्तकाष्ठं निरविशेषं[१] कृतं। तेन दानि भगवान् दृष्टो। भगवतो गौरवेण सर्वमभ्यवहृतं। तस्य दानि अपठंसु। एतं प्रकरणं भिक्षू भगवतो आरोचयें-[12. B P. 7. L. 6.]-सु। भगवानाह--एवं च यूयं सर्वं निरवशेषं दन्तकाष्ठं खादथ? तेन हि शेषाश्चत्वारि अङ्गुलानि दन्तकाष्ठस्य वर्ज्यं कर्त्तव्यं। अथ दानि भिक्षू आरण्यके शेय्यासने प्रतिवसन्ति। कल्पियकारो दुर्लभो भवति। किं कर्त्तव्यं? ज्येष्ठकानि दन्तकाष्ठानि कारापयितव्यानि। ततो भिक्षुणा [दन्तकाष्ठं] खादिय कुचकं[२] शस्त्रकेन च्छिन्दितव्यं। धोवियाणं थपयितव्यो। अपरं-[12. B. P. 7. L. 7.]दिवसं एवमेव खादिय एवं ताव थपयितव्यं[३] याव दन्तकाष्ठस्य चत्वारि अङ्गुलानि अवशिष्टानि। ततो च्छोरितव्यं। सो एषो भिक्षुः निरवशेषं दन्तकाष्ठं खादति विनयातिक्रमं आसादयति। दन्तकाष्ठं पि[४] नाम खादन्तेन न क्षमति स्तूपविग्रहे वा संघविग्रहे वा दन्तकाष्ठं खादितुं[५]। अथ दानि भिक्षुः ग्लानो भवति शिरावद्धिको वा विरेचन पीतको वा घृत-[12. A. P. 8. L. 1.] पीतको वा किञ्चापि संघविग्रहे दन्तकाष्ठं खादति। अनापत्तिः। नापि दानि क्षमति दन्तकाष्ठं

१. Ms. थोवशेषं, but cf. the next line.

२. Ms. कुच्चकं।

३. Ms. खाद°।

४. Ms. ये।

५. Ms. खादिन्तं।

६. Ms. बद्धितेन।

खादन्तेन खेटे[१] दिशोदिशं च्छोरयितुं। कुचको[२] वा उच्छिदिय[३] दिशोदिशं च्छोरयितुं। अथ खलु कटाहके[४] वा मल्लके[५] वा कोटियां वा आविद्धपुटिकायाम्वा खेटे च्छोरयितव्यो वामेन च हस्तेन कुचको गृह्णितव्यः। पश्चात् एकमन्तेन च्छोरयितव्यः। दन्तकाष्ठं पि दानि खादन्तेन नापि क्षमति उपस्थानशा-[12A. P. 8. L. 2.]लायाम्वा अग्निशालायाम्वा भक्तशालायाम्वा कल्पिककुटिकायाम्वा संघमध्ये [वा] उपाध्यायाचर्याणाम्वा अग्रतो वृद्धतरकानाम्वा भिक्षूणां अग्रतो दन्तकाष्ठं खादितुं। नापि क्षमति मातृगामस्य अग्रतो दन्तकाष्ठं खादितुं। नापि क्षमति चेतियं वंदन्तेन ओगुण्ठितशीर्षेण वा ओहितहस्तेन वा खादितुं[६]। गृहे वा प्रासादे वा खा-[12A. P. 8. L. 3.]दितुं। एकांशीकृतेन एकान्तेन खादितव्यं। नापि क्षमति दन्तकाष्ठं खादिय मध्येन पाटियान जिह्वानिलेहितुं[७] काममोगिना यथा। अथ दानि भिक्षु जिह्वां निलेहितुकामो भवति कूर्चकेन आमर्जयितव्या। नापि क्षमति विभूषणाभिप्रायेण दन्तकाष्ठं खादितुं। अथ खलु दुर्गन्धप्रहाणार्थं दन्तकाष्ठं खादितव्यं। अथ दा-[12A. P. 8. L. 4.]नि दन्तकाष्ठं न भवति अङ्गारेण वा अपक्कलद्दना वा दन्ता ओघंसयितव्याः[८]।

१. Ms. दन्तै नखे टि, of course टि may be replaced by पि। We however adopted the present reading in consonence with the next few lines.

२. Ms. कुश्वको।

३. Ms. दिच्छदिय।

४. Ms. °हकि।

५. Ms. मल्लकि।

६. Ms. थ तियाति।

७. Ms. पाटिया नार्जह्वा°।

८. Ms. ओंघस°।

अन्तमसतो अंगुलि दन्तकाष्ठं खादितव्यं। स एषो भिक्षुः सर्वेण सर्वं दन्तकाष्ठं न खादति विनयातिक्रममासादयति। एषो भिक्षु चेतियं[१] वन्दति। पश्यति दन्तपोणं, च्छोरयितव्यो। अथ दानि द्वे जना भवन्ति यो नवको भवति तेन [12. A. P. 8. L. 5.] उद्धृतव्यो। अथ दानि नवको शैथिलिको बाहुलिको भवति वृद्धतरेण उद्धृतव्यो। एवं दन्तकाष्ठे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान् धर्मानतिक्रमति ॥३॥

## उद्दानं:—

एवं शेय्यासने प्रतिपद्यितव्यं।
एवं वर्षोपगतेहि शेय्यासने प्रतिपद्यितव्यं।
एवं [12. A. P. 8. L. 6.] वर्षवुस्तेहि शेय्यासने प्रतिपद्यितव्यं।
एवं आगन्तुकेहि शेय्यासने प्रतिपद्यितव्यं।
एवं नैवासिकेहि शेय्यासने प्रतिपद्यितव्यं।
एवं हि सर्वेहि शेय्यासने प्रतिपद्यितव्यं।
एवं वर्चे प्रतिपद्यितव्यं।
एवं प्रश्रावे प्रतिपद्यितव्यं।
एवं दन्तकाष्ठे प्रतिपद्यितव्यं।

॥ द्वितीयो वर्गः ॥

१. Ms. चे वेतियं।

# [ तृतीयो वर्गः ]

भगवान् श्रावस्त्यां विहरति विस्तरेण निदानं कृत्वा पञ्चा-[12. A. P. 8. L. 7.]र्थवशान्सम्पश्यमानास्तथागता अर्हन्तः सम्यक्-सम्बुद्धा पञ्चाहिकां विहारचारिकामनुचंक्रमन्त्यनुविचरन्ति । कतमां पञ्च ? कच्चिमे श्रावकाः न कर्मारामाः न कर्मरताः न कर्मारामतानुयोगमनुयुक्ता विहरन्ति विस्तरेण यावदद्राक्षीद्भगवां पञ्चाहिकां विहारचारिकामनुचंक्रमन्तो अनुविचरन्तो अन्तरं भिक्षु भूमौ अस्तरिय चीवरं [12. B. P. 8. L. 1.] सीवन्तं । भगवां जानन्तो पृच्छन्ति—किमिदं भिक्षुः ? आह—भगवन्, इदं चीवरं सिवयामि । भगवानाह—एवन्तं त्वं भूमीये[1] अस्तरिय चीवरं सीवयसि ? तेन हि कठिनं नाम कर्त्तव्यं ।

कठिनं ताव भिक्षुणा कारापयमाणेन द्वादशहस्तां आयामतो कर्त्तव्यो अष्टहस्तां विस्तारेण वंशानां वा नलानाम्वा नंगलानाम्वा[2] काण्डा-नाम्वा[3] चरूकानाम्वा रोहिषाणां[4] वा सुत्रिकाय वा रेज्जुकाय[5] वा [12. B. P. 8. L. 2.] घणं वुणितव्यं[6] । यं कालं भिक्षुः चीवरं सीवितु-कामो भवति । उपस्थानशालायां वा अग्निशालायां वा प्रासादे वा प्रहाणके [वा] कठिनं प्रज्ञापयित्वा चीवरं सीवितव्यं । कठिनं अस्तरियाणं पादां

१. Ms. भूमिय ।

२. Ms. नगलानाम्वा cf. 12B. P8. L7. Ibid.

३. Ms. न काण्डा ।

४. Ms. रोहियाणाम्वा ।

५. Ms. रेज्जकाये ।

६. Ms. दाण भणितव्यं ।

धोवियाणं कठिनस्मिं पल्लंकेनोपविशियाणं[१] तं चीवरं सीवितव्यं। अथ दानि अपरो पि कोचि सीवयि[तु]कामो भवति तेनापि पादां धोवयित्वा कठिनस्मिं पल्लंकेनोपविशिय चीवरं [12. B. P. 8. L. 3.] सीवयितव्यं। अथ दानि निषण्णो[२] बाहिरकां पादां कृत्वा सूत्रं[३] वलेन्तो आसति अनापत्तिः। अथ दानि भिक्षुः कठिनं सीवयितुकामो[४] भवति न क्षमति अधोतकेहि पादकेहि कठिनं ओकमितुं। अथ खलु बाह्येन कठिनस्मिं[५] पादानि थपियाणं[६] चीवरं सीवयितव्यं। यं कालं चीवरं सीवितं भवति। कठिनं संवटियाणं[७] भित्तीये द्वे कीलकानि खनिय रज्जुए-[12. B. P. 8. L. 4.]बन्धिय[८] तहिं उक्कवयितव्यं। यदि अपरो पि कोचि सीवियितुकामो भवति तेनापि कठिनं अस्तरीय चीवरकं तथा येव[९] सीवयितव्यं। नापि क्षमति कठिनस्य रङ्गे वा शोधयितुं गोमयं वा चीवरकानि वा शोधयितुं। अथ खलु चीवरकं सीवयितव्यं। नापि क्षमति कठिनं अध्युपेक्षितुं। उल्लर्गकं वा पलुर्गकं वातातपेन[१०] विनाशियन्तं[११] वर्षेण वा ओव-[12. B. P. 8. L. 5.]र्षियन्तं पक्षीहि वा ओहपियन्तां।

---

१. Ms. नौप°।
२. Ms. निक्षुण्तो।
३. Ms. मूत्रं।
४. Ms. पादानं धोवयितुकामो।
५. Ms. °स्मि।
६. Ms. °थयि। याण।
७. Ms. खवटियाणं।
८. Ms. वस्विय।
९. Ms. ये च तथा।
१०. Ms. तातयेन।
११. Ms. विनासियन्तं।

अथ खलु कालेन कालं बन्धितव्यं[1]। कालेन कालं प्रतिसंस्कर्त्तव्यो। अथ दानि कठिनं न भवति मञ्चस्य वा उपरि चीवरं पीठस्य वा उपरि-चीवरकं करियाणं सीवितव्यं। अथ दानि एवं न भवति प्रहाणशालायाम्वा उपस्थानशालायाम्वा मण्डलमाडे वा प्रदेशकं गोमयेन उपलिम्पिय चीवरकं सीवितव्यं। अन्तमस-[12. B. P. 8. L. 6.]तो जानुकानां पि उपरि चीवरकं थविय सीवयितव्यं। एवं कठिने प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति। अपरो दानि भिक्षुः प्रहाणकं उपविष्टो। सो दानि यथासुखं कृते विहारकं अपदुरिय[2] प्रविशति शीतलकं च तेन आक्रान्तं। तस्य भवति दीर्घको मया आक्रान्तो। तस्य दानि तेन निवरणेन[3] सर्व-[12. B. P. 8. L. 7.]रात्रि[4] चित्तं न समाधानं गच्छति। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह—तेन हि चक्ली नाम कर्त्तव्या। चक्ली तावद्भिक्षुणा कारापयमाणेन कारापयितव्या वंशा-नाम्वा नडानाम्वा नङ्गलानाम्वा कण्डानाम्वा रेज्जुकाये वा सूत्रकाये वा घणा वुणितव्या[5] तथा कर्त्तव्या यथा दीर्घको न संसकति। विहारस्य द्वारस्मिं उपरि त्रयो कीलकानि आटयितव्या [13. A. P. 1. L. 1.]। तहिं चक्ली बन्धितव्या[6] ओसारियाणं हेष्ठे द्वे[7] कीलकानां पीठियाण तहिं

१. Ms. वन्धि॰।
२. Ms ऊपदुरिय।
३. Ms. निवरेणेन।
४. Ms. सर्वथा ति।
५. Ms. वुणि॰, but cf. 12B. P8. L3.
६. Ms. वन्दितव्या।
७. Ms. क्यटेद्दे।

बन्धितव्यं । यं कालं भिक्षुः प्रहाणं ओतरन्ति ततो द्वारं मुञ्चितव्यं । निवापियाण[२] चक्कली ओसारियाणं कीलकेहि बन्धियाण[३] ततो ओसारितव्यं । यं कालं प्रहाणस्य यथासुखं कृतं भवति ततो विहारं गच्छियाणं चक्कली उत्क्षिपितव्या । नापि दानि सहसा । अनेकायो मा तर्हि[४] दीर्घको प्रविष्टो भवे-[13. A. P. 1. L 2.]यन्ति । अथ खलु खटखटापयितव्यो[५] काष्ठेन वा कठल्लेन वा । ततो पश्चाच्चक्कली उत्क्षिपितव्या । प्रविशियाणं चक्कली ओसारयितव्या । द्वारं बन्धितव्यं । ततो प्रतिक्रमितव्यं पश्चिमं प्रहाणं ओतरितव्यं[६] । द्वारं अपदूरितव्यं[७] । चक्कली उत्क्षिपियाणं द्वारं पिधियाणं[८] चक्कली ओसारियाणं प्रहाणं ओतरितव्यं । प्रहाणतो यं कालं उत्थितो भवति । विहारं गच्छियाणं यदि [13. A. P. 1. L. 3.] वा[९] प्रभातं भवति चक्कली उत्क्षिपियाणं उपरि बन्धितव्या[१०] । द्वारं अपदूरिय ततो प्रविशितव्यं । एवं देवसिकं । न दानि क्षमति दिवसत ओसरयित्वा थपयितुं । नापि क्षमति सा चक्कली अध्युपेक्षितुं उल्लगिंका वा प्राणकेहि

---

१. Ms. वन्दि॰ ।
२. Ms. निवयियाणं ।
३. Ms. बन्धियाण ।
४. Probably it is तहि ।
५. Ms खट खटं पयितव्यो ।
६. Ms. ओभवितव्यं ।
७ Ms. अपदुचरि॰ ।
८. Ms. पिवियाणं, should be पिधहि ।
९. Ms. व । The correct reading seems ताव ।
१०. Ms. बन्धितव्या ।

वा खज्जन्ता[1] । अथ खलु कालेन कालं बन्धितव्या[2] । कालेनकालं प्रतिसंस्कर्त्तव्या । एवं चक्क-[13. A. P. 1. L. 4.]लीये प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति विस्तरेण निदानं कृत्वा पञ्चार्थवशां संपश्यमाना याव विस्तरेण [ निदानं ] कृत्वा यावदद्राक्षीद्भगवां पञ्चाहिकां विहारचारिकामनुचंक्रमन्तो विहारां ओद्रिण्णकां पलुग्गकां अचौक्षां अप्रतिसंस्कृतां । भ-[13. A. P. 1. L. 5.]गवान् जानन्तो येव पृच्छति—किं इमे भिक्षू, विहारका ओद्रिण्णका पलुर्गका ओल्लाये गृहीतका अचौक्षा अप्रतिसंस्कृता ? तेन हि एवं विहारे प्रतिपद्यितव्यं । विहारा नाम त्रीणि—ज्येष्ठको मध्यमको कनीयसको । ज्येष्ठको नाम विहारको भूमि भवति मापकालवर्णा उल्लायो[3] भवति प्रयाणुरो[4] । भित्ति भवति कृतकर्मा । एवं ज्ये-[13. A. P. 1. L. 6.]ष्ठको । किन्तिदानि मध्यमको[5] ? मध्यमको नाम विहारको भवति मापकालवर्णा । भित्तिं भवति कृतकर्मा । न च भवति उल्लायो प्रयाणुरो । एवं मध्यमको । किन्तिदानि कनीयसको ? भूमि भवति मापकालवर्णा । नापि भवति उल्लायो प्रयाणुरो । नाहैव भित्ति कृतपरिकर्मा एवं कनीयसको । यो दानि ज्येष्ठको भवति विहारो नायं क्षमति तहिं मंचा [13. A. P. 1. L. 7.] वा पीठा वा प्रविश[यि]तुं[6] । अथ

---

१. Ms. खज्जन्ति ।

२. Ms. वन्दितव्या ।

३. Ms. उल्लोको ।

४. Ms. प्रयान्तरा ।

५. Ms. किन्तिमध्यको preceded the sentence.

६. Ms. प्रविशितुं ।

खलु चत्वारि प्रतिपादका कर्त्तव्या। मा भूमि खनोयंति प्रवेशियाणं। ततो तहिं प्रतिपादकानां उपरि थपेतव्यो। अथ दानि प्रतिपादको न भवति लेङ्कटकेहि पादा वन्धितव्या[१]। पीठं प्रवेशेति पीठस्यापि एवंप्येव आसन्दकं त्रिपादकं[२] वा प्रवेशेति। तस्यापि लेङ्कटकेहि पादका वन्धितव्या[३]। नापि तहिं क्षमति मन्दमुखी[४] प्रज्वा-[13. B. P. 1. L. 1.]लयितुं[५]। दीपको वा प्रवेशयितुं। अथ दानि भिक्षुः शेय्यां प्रज्ञपयितुकामो[६] भवति किञ्चापि दीपकं प्रवेशेति अनापत्तिः। शेय्यां प्रज्ञपयन्ते[७]नैव च्छुत्ति[८] निक्कालयितव्या। नापि क्षमति तहिं पादां धोवितुं। हस्तां धोवितुं। मुखं धोवितुं। नापि क्षमति तहिं चंक्रमं चंक्रमितुं। यत्कौलिं धुनन्तेन[९]। अथ दानि भिक्षुः ग्लानो भवति किञ्चापि तश्च[१०] गतगतां देति अनाप-[13. B. P. 1. L. 2]-त्तिः। नापि दानि क्षमति एकेनान्तेन[११]। अथ खलु समन्तेन[१२] चंक्रमितव्यं। नयं वोलि तद्वाययन्तेन[१३]। न क्षमति तहिं भक्तकृत्यं। पुरे

१. Ms. वन्दितव्या।
२. Ms. तृ°।
३. Ms. वन्दि°।
४. Ms. मन्दमुख।
५. Ms. प्रज्ञालपितुं।
६. Ms. प्रज्भप°।
७. Ibid.
८. Ms. च्छिन्ति।
९. Ms. पुनन्तेन।
१०. Ms. पश्च, but three letters are not clear enough.
११. Ms. एकेनानेन।
१२. Ms. समरतेन।
१३. We could not make out the meaning of this sentence.

भक्तिकं वा कर्तुं। पात्रं वा निर्मादयितुं। अथ दानि मध्यमको भवति मध्यमकेपि[1] एषो एव पर्यायो। अनन्यो अधिकृतो[2]।

अथ दानि कनीयसको विहारको भवति। किञ्चापि भिक्षुः विना प्रतिपादकेहि मञ्चकं थपेति अनापत्तिः। [13. B. P. 1. L. 3.] पीठकम्वा पीठिकाम्वा त्रिपादकम्वा[3] विना प्रतिपादकेहि थपेति अनापत्तिः। मन्द-मुखीम्वा प्रज्वालेति अनापत्तिः। दीपं वा प्रवेशेति अनापत्तिः। ग्लानो वा अग्लानो वा अनापत्तिः। किञ्चापि चंक्रमति अनापत्तिः। जानितव्यं। यदि ताव उपेतनको[4] सो[5] विहारको भवति। नापि तर्हि क्षमति पादां धोवितुं हस्ताम्वानिर्मादयितुं। [13. B. P. 1. L. 4] अथ दानि उपं-सुलको[6] भवति किञ्चापि भिक्षुः पादाम्वा धोवति मुखम्वा धोवति हस्तम्वा निर्मादयति रहोनिग्रहं काहेतित्ति अनापत्तिः। भक्तकृत्यम्वा पुरे[7]भक्तिकम्वा करोति पात्रम्वा निर्मादयति अनापत्तिः। नापि क्षमति विहारको अध्यु-पेक्षितुं। ओद्रिण्णको वा पलुग्गको वा ओल्लाये गृहीतको वा अचौक्षो वा [13. B. P. 1 L. 5] अध्युपेक्षितुं। अथ दानि ओद्रिण्णको भवति तृणच्छदनो भवति तृणपुलको दातव्यो। मृत्तिकाच्छदनो भवति मृत्तिका-पिण्डो दातव्यो। इष्टकाच्छदनो भवति इष्टका दातव्या। अपक्वच्छदनो

---

१. Ms. मध्यकेपि।
२. Probably अधिप्रेतो or अभिप्रेतो।
३. Ms. भूपादकम्वा।
४. It seems to be उप्पीडनको or उत्पीडितको।
५. Ms. से।
६. Ms. उप॰।
७. Ms. पुरो।

भवति अपक्का दातव्या। कभल्लच्छुदनो भवति कभल्लिका[१] दातव्या। फलकच्छुदनो भवति फलकं[२] दातव्यं। सुधा-[13. B. P. 1. L. 6.]च्छुदनो भवति सुधापिण्डो दातव्यो। कालेन कालं शोधयितव्यो। संतानिका साढयितव्या[३]। मूषिक उक्किरो वा कोटयितव्यो। उक्कलनिक्कलो भवति समो कर्त्तव्यो। चिक्कलिका पूरेतव्या। वंघोरिका[४] दातव्या। उल्लाये गृहीतको भवति शाटियाणं लिप्तोपलिप्तो घट्टनष्टो[५] कर्त्तव्यो। उप्पे-डनको[६] भवति पांसुकेन वा शर्करोटेन वा प्र-[13. B. P. 1. L. 7.]त्या-स्तरितव्यो[७]। उपांसुलको विहारको भवति कालेन कालं सिञ्चितव्यो संमार्जितव्यो गोमयकार्षी दातव्या शंतानिका शाटयितव्या। एवं विहारे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्याम्विहरति [याव] पञ्चार्थवशां विस्तरेण [निदानं]कृत्वा यात्र अद्राक्षीद्भगवान् पञ्चाहिकां विहार चारिकामनुचंक्रमन्तो। [13. A. P. 2. L.1.] अनुविचरन्तो विहारकां पक्कखेटेन वा पक्कसिंघाणकेन भित्तीयो विनासितायो सिंघाणकवर्त्तीहि[८] लम्बन्तेहि। भगवान् जानन्तो येव पृच्छति—किं इमायो भिक्षवे, विहारकानां भित्तियो पक्कखेटेन पक्कसिंघाणकवर्तीहि[९] लम्ब—

१. Ms. कभल्लका cf. 11B. P7 L4.
२. Ms. पलक॰।
३. Ms. सतयितव्या। Also शाट॰ cf. the next line.
४. Ms. वंचोरिका, but cf. 11A. P6. L6. & 11B. P7. L5.
५. Ms. भ्रष्ट॰।
६. Ms. उप्येडनको।
७. Ms. त्याभुरितव्यौ।
८. Ms. ॰यो सिं आणक॰।
९. Ms. The word पक्व॰ has been referred to as पक्क॰ everywhere in this para

न्तेहि[1] ? तेन हि एवं खेटे प्रतिपद्यितव्यं। किन्तिदानि एवं खेटे प्रतिपद्यि-तव्यं ? नायं क्षमति भिक्षुणा कृतकर्मायां वा अकृ-[13 A. P. 2. L. 2 ]त कर्मायां वा भित्तियं खेटम्वा[2] सिंघाणकम्वा छोरयितुं। अथ खलु खेटक-टाहे[3] कर्त्तव्यं। कपालम्वा मल्लम्वा कुण्डिकम्वा दकानकम्वा लिप्तोपलिप्तं[4] करिय वालिकाये वा पाषाणस्य वा यत्थ[5] छिद्रकानाम्वा पूरयितव्यं। ततो तहिं खेटो[6] कर्त्तव्यो। नापि क्षमति खेटकटाहकं अध्युपेक्षितुं। मा सप्रमा-णको भवेय। अथ खलु कालेन कालं छो[13. A. P. 2. L. 3.]रिय अन्यस्य पूरयितव्यं। आतपे वा दातव्यो। सो[7] भूयो प्रवेशयितव्यो। अथ दानि खेटकटाहकं भवति मल्लकं वा कोटिकम्वा आवद्धपुटिका[8] वा। थपेतव्या। तहिं खेटो कर्त्तव्यो। कालेन कालं विसर्जयितव्यो। अथ दानि एवं पि न भवति कृतकर्मा भूमि भवति न क्षमति भूमीये छोरयितुं। अथ खलु एकस्य उपानहाये [13. A. P. 2. L. 4.] तले छोरयितव्यं द्वितीयेन मर्दयितव्यं। अथ दानि उप्पंसुलो विहारो भवति भूमीये छोरिय पादेन मर्दितव्यो। एषो भिक्षुः दिवाविहारं गतो चंक्रमति। श्लेष्मिको भिक्षु भवति। इतो च छोरियन्तो चंक्रमति विनयातिक्रममासादयति। अथ खलु छोरियाण पादेन मर्दितव्यं। चंक्रमशीर्षे वा आविद्धपुटिका वा

---

१. Ms. °सिंघाणकेन वर्त्तीहि लम्बन्तोहि।
२. Ms. खेटक्षा।
३. Ms. कटाहं।
४. Ms. लिप्तोपलिष्टं।
५. Ms. पत्थ।
६. Ms. खेटे।
७. Ms. यो।
८. Ms. आविद्ध्य°।

वालिका-[13. A. P. 2. L. 5.] ये वा कूटिमल्लकं वा थपेतव्यं। तहिं खेटो छोरयितव्यो। यं कालं गच्छति ततो एकमंते[1] च्छोरयितव्यो। प्रहाणे आसन्तस्य खेटं बाधति उपानहपुटे[2] कृत्वा भूमिये[3] मर्दितव्यं। अथ दानि भूम्यस्तारो भवति भाजने कर्तव्यं कुण्डके[4] वा अलाबुके वा वंशत्थोलिकायां वा। अथ दानि उच्छदो भवति खेटम्वा सिंघाणकं [13. A. P. 2. L. 6.] वा उत्थित्वा एकान्ते कृत्वा पुनः उपवेष्टव्यं। उपाध्यायाचार्याणां वा मूले खेटं व्यावहति एकान्ते कर्त्तव्यं। एषो दानि भिक्षुस्य गोचरं प्रविशन्तस्य अध्वानमार्गगतस्य[5] वा खेटे आगच्छति च्छोरिय पादेन मर्दितव्यो। अमर्दिय गच्छति विनयातिक्रममासादयति। अथ दानि क्षुद्रो खेटे उपांसुलो च भूमी भवति। छोरन्तको येव[6] पर्यादानं गच्छ-[13. A. P. 2. L. 7.]ति किंचापि न मर्दति अनापत्तिः। एषो भिक्षुः स्तूपं वन्दति, स्तूपाभिगृहे वा खेटं च्छोरितकं केनचि अप्रकृतिज्ञो[7] न पादेन मर्दितव्यो। अथ दानि द्वे जना भवति यो नवको भवति तेन मर्दितव्यं। अथ दानि नवकतरो शैथिलिको बाहुलिको[8] वा भवति वृद्ध-तरकेन मर्दितव्यं। एवं खेटे प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारि-कान्धर्मानति-[13. B. P. 2. L. 1.]क्रमति ॥३॥

---

१. Ms. एकतमं ते।
२. Ms. ओपानह।
३. Ms. भूमिं ये।
४. Ms. कुन्तके।
५. Ms. अधान।
६. Ms. योव।
७. Ms. अप्रकृतको।
८. Ms. बाहूकल्किो।

भगवान् श्रावस्त्यां विहरति विस्तरेण निदानं कृत्वा अपरेण दानि भिक्षुणा मुण्डवातायने[1] पात्रं स्थवितं। तन्दानि वातमण्डलिकाये आगच्छियाणं भूमियं पतितो भिन्नो। कपालानां राशिं कृत्वा यवागूये गण्डी आकोटिता। सो दानि हस्तां निर्मादिय विहारकं प्रविष्टो पश्यति। कपालिकानां राशिं। एतं प्रकरणं सो[2] भिक्षुः भगवतो आरोच-[13. B.-P. 2. L. 2.]ये। भगवानाह—एवं च त्वं मुण्डवातायने[3] पात्रं थपेसि। तेन हि एवं पात्रे प्रतिपद्यितव्यं। किन्तिदानि एवं पात्रे प्रतिपद्यितव्यं? भिक्षुणा ताव कल्यतो येव[4] निवासिय प्रावरिय पात्रचीवरमादाय गोचरं प्रविशितव्यं। गोचरातो निर्धाविय आहारं करीय पात्रं निर्मादयितव्यं। नापि क्षमति कर्कशेन वा चूर्णेन[5] कर्कशेन वा गोमयेन निर्मादयितुं। अथ [13. B. P. 2. L. 3.] खलु मूलरसेन वा पत्ररसेन वा पुष्परसेन वा निर्वालिकेन वा गोमयेन निर्मादयितव्यं। नापि क्षमति विल्वस्य वा पक्कस्य कपित्थस्य[वा]पक्कस्य नालिकेरस्य हेष्ठे निर्मादयितुं। मा पक्वेन वा विल्वेन पक्वेन[वा] कपित्थेन पक्वेन वा नालिकेरेण भंजेयन्ति। नापि क्षमति दरिनिश्रतेन वा पात्रं निर्मादयितुं। मा पतितं भञ्जयतु[6]। [13. B. P.-2. L. 4.] अथ खलु कर्षधाने वा वालिकाधाने वा दुर्वा साद्वले वा निर्मादयितव्यं। नापि क्षमति स्थितकेन पात्रं निर्मादयितुं। नापि क्षमति

---

१. Ms. मुण्डे वातायणे। cf. Next line, also next page 13B. P2. L5.

२. Ms. यो।

३. Ms. Here वातयाने।

४. Ms. कल्पतो ये च।

५. Ms. वृत्तेन।

६. Ms. भञ्जयन्ति।

भूमीये घसन्तेन[१] । अथ खलु उपविष्टकेन[२] निर्मादयितव्यं । शोषपयन्तेन[३] नापि क्षमति स्थितकेन शोषापयितुं[४] । अथ खलु उपविष्टेन शोषापयितव्यं[५] । प्रतिसामयन्तेन नापि क्षमति जंघा-[13. B-P. 2. L. 5.]पथे वा स्थापयितुं । कपाटे वा मुण्डवातायने वा । अथ खलु पात्रं प्रवेशिकायां प्रक्षिपिय स्थपेतव्यं । नापि क्षमति स्थितकेन प्रक्षिपितुं । अथ खलु उपविष्टकेन प्रक्षिपितव्यं । पात्रप्रसेविका नागदन्तके वा कीलके वा उक्कचिय थपेतव्या । अथ दानि उज्झको कीलको भवति दूवे त्रयो वा अवेठका दातव्याः । अथ दानि नागदन्तको [13. B. P. 2. L. 6] भवति किञ्चापि एवमेव थपेति अनापत्तिः । पात्र प्रसेविका न भवति पात्रपीठके थपेतव्यं । अथ दानि पात्रपीठकं न भवति काष्ठम्वा इष्टकम्वा उपलम्वा निरामिषं निर्मादिय तस्य उपरि स्थपेतव्यं । अथ दानि एवं पि न भवति अन्तमसतो पृथिवी प्रदेशं पि गोमयेन उपलिम्पिय थपेतव्यं । गृह्णन्तेन नापि क्षमति एकहस्तेन दुवे त्रयो वा पात्राणि गृह्णितुं । अ-[13. B. P. 2. L. 7.]थ खलु परमं[५] त्रयो पत्राणि गृह्णितव्यानि । एक हस्तेन द्वे गृह्णितव्याः । अपरेण दानि एकं । अथ दानि प्रत्यन्धकारको विहारको भवति न क्षमति पात्रेण पात्रं मार्गितुं । अथ खलु हस्तेन मार्गितव्यं । अथ दानि भिक्षुः उपाध्यायस्य वाचार्यस्य[६] वा पात्रमल्लीपयति[७] । नापि क्षमति उपाध्यायस्य वा आचार्यस्य वा पात्रं वामेन

१. Ms. घसन्तेन ।

२. Ms. उपविष्टे के न ।

३. Ms. अध्वावयन्तेन, but cf. 13A. P3. L2.

४. Ms. अध्याय । Ibid.

५. Should be त्रयो परमं ।

६. Ms. चाचार्यस्य ।

७. Ms. पात्र मूलीय पति ।

हस्तेन अल्लीपयितुं । अथ खलु [13. A. P. 3. L. 1.] उपाध्यायस्य वा आचार्यस्य वा दक्षिणेन हस्तेन पात्रं अल्लोपयितव्यं[१] । नापि क्षमति गृहीतं न गृहीतन्ति ततो मुञ्चितव्यं । ओकड्ढन्तेन[२] सुगृहीतं कर्त्तव्यं । निर्मादयन्तेन प्रथमं उपाध्यायस्य वा आचार्यस्य वा पात्रं निर्मादयितव्यं । पश्चादात्मनो । शोषयन्तेन प्रथमं उपाध्यायस्य वा आचार्यस्य वा शोषयितव्यं । पश्चादात्मनो । प्रतिसामयन्तेन प्रथमं उपा-[13. A. P. 3. L. 2.]ध्यायस्य वा आचार्यस्य वा प्रतिसामयितव्यं । पश्चादात्मनो । प्रवेशिका कर्त्तव्या दुपुटा त्रिपुटा[३] । प्रसेविकायां प्रक्षिपियन्तेन कलावीयं दाडीयं अंसित्रद्धकं प्रक्षिपित्वा समवस्थाय उपविष्टकेन उत्सङ्गस्य उपरि प्रक्षिपितव्यं । मञ्चस्य वा पीठस्य वा उपरि प्रक्षिपितव्यं । उल्लयन्तेन कीलकं[४] हस्तेन प्रत्यवेक्षित्वा मञ्चस्य वा पीठस्य वा उपरि प्रक्षिपितव्यं । ( उल्लयन्तेन कीर्णकं हस्तेन प्रत्यविक्षित्वा मञ्चस्य वा पीठस्य वा उपरि )[५] जालवाताय[13. A. P. 3.-L. 3.]ने वा पात्रमेलके वा यथा न घट्टेंसु । नापि क्षमति पात्रं अध्युपेक्षितुं । फलकेन[६] वा खज्जन्तं खण्डं वा च्छिद्रं वा । अथ खलु कालेन कालं दहितव्यं पचितव्यं रञ्जितव्यं । न दानि क्षमति पात्रेण अप्रयत्तं[७] गृह्णितुं । उच्चारो वा प्रस्रावो वा खेटं वा सिंघाणकं वा विघसो वा संकारो वा अन्यम्वा अप्रयत्तं ग्रहेतुं[८] । नापि दानि क्षमति पात्रे-[13. A. P. 3. L. 4.]ण[९] केषां

१. Ms. कल्पीययितव्यं।
२. Ms. ओकड्ढन्तेन ।
३. Ms. तृपुटा ।
४. Ms. कीर्णकं ।
५. The portion of sentence breaketted by us seems to be a repeatition.
६. Ms. पालकेन ।
७. Ms. अप्रयतुं, but Pali (अ+) Payatta=taking care, cf. P. E. D.
८. Should be गृहीतुं ।
९. Ms. पातिण ।

ओतारयितुम्वा पादं वा मुखं वा धोवितुं जेन्ताकम्वा प्रवेशितुं उदककृत्यं वा कर्तुं यथा अत्तिस्मिं। एवं पात्रे प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति। ते[1] दानि आयुष्मतो षड्वर्गिकाः एकत्यं यवागुं निन्दन्ति एकत्यं प्रशंसन्ति। यो तावत्यल्पं[1A] वा भवति [13. A. P. 3. L. 5.] जल्पन्ति—हे हे हे नायं किञ्चिद्यवागु। गङ्गा अयं सरयु अचिरावती[2] मही महानदी[3] त्ति। निचूउवुन्तिका ये इमं हि तण्डुला मार्गितव्या। अथ दानि खक्खट भवति जल्पति—हे हे हे नायं किञ्चि यवागू। लेह्यं[4] अयं। पेय्या अयं। कट्टारिका छेज्जा अयं। ते दानि भिक्षू उत्त्रिप्ता भवन्ति जिह्वा वेट्टा निष्प्रतिभानाः[5]। एतं प्रकरणं भि-[13. A. P. 3. L 6.]क्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ षड्वर्गिकां। ते दानि शब्दापिताः। एतदेव पृच्छयन्ति। आह— आम भगवन्। भगवानाह—तेन हि एवं यवागूये प्रतिपद्यितव्यं। किन्तदानि एवं यवागूये प्रतिपद्यितव्यं? एषो दानि यवागूये समयो आरोचितो भवति। ततो जानितव्यं—किमयं यवागू उभयतो सांघिका पर्याये[6] परिवेणिका[7] निमन्त्रितका-[13. A. P. 3. L. 7.]यं। यदि ताव उभयतो सांघिका भवति सर्वेहि

१. Ms. तेन।

१A. Ms. तावत्यलं।

२. Ms. अजिरावती।

३. Ms. महामही।

४. Ms. लेच्छं।

५. The last few lines are very clumsy in the Ms. for which readings are not clear enough.

६. Ms. पर्यायि। Should be पार्षिका।

७. Ms. परिवेशिका।

गन्तव्यं। पार्षिका भवति ताये पर्याये[A] गन्तव्यं। परिवेणिका[1] भवति तेहि परिवेणिकेहि गन्तव्यं। निमन्त्रितका वा भवन्ति तेहि निमन्त्रितकेहि गन्तव्यं। प्रतिक्रुत्येव ताव भिक्षुणा दन्तकाष्ठं खादयितव्यं[2]। मुखं धोविय हस्तान्निर्मादिय पात्रं गृह्णिय उपविशितव्यं। नापि क्षमति यवागू उपानहारूढ़ेन[3] वा प्रतिच्छितुं। [13. B. P. 3. L. 1.] ओगुण्ठिका[4] कृतेन वा समंत प्रावृतेन वा प्रतिच्छितुं। अथ खलु उपानहा निक्षेपिय[5] एकांशकृतेन यवागू प्रतिच्छितव्या। अथ दानि दण्डकर्म प्रतिदिन्नं भवति पार्ष्णि बद्धा[6] ओप्रुञ्छितव्या। द्वितीय कालिकस्य लाभग्राहं अध्येषित्वा गन्तव्यं! अथ दानि उपविष्टकानां [पटि-] पाटिकाये दीयति। यथावृद्धकाये गृह्णितव्यं। यदि ताव तनुका भवति न वक्तव्यं हे हे हे गङ्गा अयं[7] सर्वं या-[13. B. P. 3. L. 2.]व[8] मही चन्द्रभागा अयं[9]। अथ दानि अतिघना भवति न वक्तव्यं—नायं यवागू ओदनो अयं। दण्डासनि भेज्ञा[10] अयं। अथ खलु यादृशी दीयते तादृशी प्रतिच्छितव्या[11]। दायकदानवशो

---

A. Ms. पार्श्विका भवति तापि पर्याये।

१ Ms. परिवेशि°।

२. Ms. °तव्या।

३. Ms. °रुटेन।

४. Ms. गुगुण्डका।

५. Ms. निखोषिय

६. Ms. प्राप्ति वव्रा।

७. Ms. आय।

८. Ms. र्यव।

९. Ms. अयं।

१०: Ms. °भेज्ञा।

११. Ms. प्रतिच्छिता।

न प्रतिग्राहकवशो। अथ दानि भिक्षुः जरा दुर्बलो वा भवति अति शीतम्वा अति उष्णम्वा। भिक्षु नैव दन्तकाष्ठं खादति न मुखं धोवति। न हस्तान्निर्मादयति। आनन्त-[13. B. P. 3. L. 3.]र्यस्य वा[1] पात्रं दातव्यं। वक्तव्यं—आयुष्मान्, इमं मम यवागूये प्रत्यंशं, गृह्ण। यं कालं प्रतिच्छिता भवति ततो परिभुञ्जितव्या। एते विलम्बका यवागू निन्दन्ति वा प्रसंसन्ति वा विनयातिक्रमं आसादयन्ति। एवं यवागूये प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥

भगवान् श्रावस्त्यां विहरति विस्तरेण निदा-[13. B. P. 3. L. 4]नं कृत्वा अपरो दानि भिक्षुः योगाचारो[2] वैदेहके पर्वते निषण्णो चित्तं समाधयिष्यामीति। अपरो दानि भिक्षुः आगच्छिय तस्य पुरतो स्थितो। तस्य दानि तेन नीवरणेन[3] चित्तं समाधानं न गच्छति। एतं प्रकरणं सो योगाव[च]रो[4] भगवतो आरोचये। भगवानाह—शब्दापयथ तं भिक्षुं। सो दानि शब्दापितो। भगवानाह—सत्यं भिक्षू, [13. B. P. 3. L. 5.] एवं नाम अपरो योगाचारो वैदेहके पर्वते निषण्णो। चित्तं समाधयिष्यन्ति। त्वं दानि तस्य पुरतो आगच्छिय स्थितो। तस्य दानि तेन नीवरणेन चित्तं समाधानं न गच्छति? आह—आम भगवन्। भगवानाह—दुष्कृतं ते भिक्षु। एवं[5] च त्वं योगाचारस्य भिक्षुस्य पुरतो तिष्ठसि। तेन हि एवं स्थातव्यं—किन्तिदानि एवं स्थातव्यं? नायं ताव क्षमति

---

१. Ms. या।
२. Pali योगावचरो।
३. Ms. नीवरेन।
४. Ms. येगवरो।
५. Ms. एव।

भि-[13. B. P. 3. L. 6.]क्षुणा योगाचारस्य भिक्षुस्य पुरतो तिष्ठितुं। नापि क्षमति वेशिका सामन्तेन[१] वा तिष्ठितुं। वधबन्धनागारशाला[२] सामन्तेन वा तिष्ठितुं। नायं क्षमति अति गुप्ते वा अति प्राकटे वा प्रदेशे तिष्ठितुं। अथ खलु छन्नप्राकटे प्रदेशे स्थातव्यं। न क्षमति स्तूपं वा पृष्ठतो कृत्वा तिष्ठितुं। संघं[३] वा उपाध्यायाचार्यम्वा वृद्धतरकम्वा पृष्ठतो कृत्वा तिष्ठितुं। उपानहारूढेन[४] [13. B. P. 3. L. 7.] वा तिष्ठितुं[५] खंभकृतेन[६] वा ओगुण्ठितशीर्षेण वा ओहित[७]हस्तेन वा। नापि क्षमति संघमध्ये मा तिष्ठ ति उक्तो तिष्ठितुं। उपाध्यायाचार्येहि वा उक्तेन समानेन[८] मा तिष्ठेति तिष्ठति विनयातिक्रममासादयति। अथ दानि ग्लानो भवति किञ्चापि उपानहारुढो ओगुण्ठितशीर्षो वा ओहितहस्तो वा तिष्ठति अनापत्तिः। एवं स्थातव्यं। न तिष्ठति अभिसमाचारिकान्धर्मानतिक्र-[13. A. P. 4. L. 1.]मति ॥३॥

भगवान् राजगृहे विहरति शास्ता देवानाञ्च मनुष्याणाञ्च विस्तरेण निदानं कृत्वा अपरो दानि भिक्षुः योगाचारो वैदेहके पर्वते निषण्णो चित्तं समाधयिष्यामीति। अपरो दानि भिक्षुः आगत्वा तस्य परतो तालपादुकाहि आवद्धाहि दीर्घचंक्रमं चंक्रमति। टप्य टटप्यं टप्य टटप्यन्ति[९]। तस्य

---

१. Ms. सम°।
२. Ms. वध बन्धन°।
३ Ms. संघे।
४ Ms. उपानहारातेन।
५ Ms. तिष्ठितुं।
६. Ms. खंत, Pali Pāt खंभ and Sk. Prat स्कम्भ।
७. Ms. ओवादित।
८. Ms. सपानेन।
९. In the Ms. all the four words are scribed together.

दानि तेन शब्देन चित्तं न समाधानं गच्छति। एतं प्रक-[13. A. P. 4.-L. 2]रणं सो योगाचारो भगवतो आरोचये। भगवानाह—सत्यं भिक्षु, एवं नामा अपरो योगाचारो वैदेहके पर्वते निषण्णो चित्तं समाधयिष्यामिति तदेवं सर्वं भगवान्विस्तरेण प्रत्यारोचयति। याव तस्य दानि तेन शब्देन चित्तं न समाधानं गच्छति। आह—आम भगवन्। भगवानाह—दुष्कृतं ते भिक्षुः। एवं च त्वं योगाचारस्य भिक्षुस्य पुरतो चंक्रमसि। तेन हि [13. A. P. 4. L. 3.] एवं चंक्रमितव्यं। किन्तिदानि एवं चंक्रमितव्यं? नायन्ताव क्षमति भिक्षुणा योगाचारस्य भिक्षुस्य पुरतो चंक्रमितुं। नापि क्षमति स्तूपम्वा पृष्ठतो कृत्वा चंक्रमितुं। संघं वा पृष्ठतो कृत्वा चंक्रमितुं। उपाध्यायाचार्यम्वा पृष्ठतो कृत्वा चक्रमितुं। एषो दानि भिक्षुः उपाध्यायेण वा आचार्येण वा सार्धं चंक्रमति। [न क्षमति] उपाध्यायस्य वा आचार्यस्य [वा] अति-[13. A. P. 4. L 4.]रेकं चंक्रमितुं। नापि क्षमति समं चंक्रमयितुं[1]। अथ खलु द्वे त्रयो वा पादा निहीनकेन[2] चंक्रमितव्यं। संघमध्ये वा चंक्रमति मा चंक्रमाहीति उक्तेन न चंक्रमितव्यं। अथ दानि ग्लानो घृतं वा पीतं विरेचनं वा पीतं[3] किञ्चापि चंक्रमति। तत्र क्षमति पुरतो, समं वा गन्तुं। ओहयित्वा गन्तव्यं। अनुपरिवर्त्तन्तेन[4] तदा न क्षमति उ-[13. A. P. 4. L. 5.]पाध्यायाचार्याणां वा पृष्ठतो कृत्वा परिवर्त्तितुं[5]। अथ खलु अभिदक्षिणं अग्रतो करेन्तेन अनुपरिवर्त्तितव्यं। नापि क्षमति वेसिका सामन्तकेन चंक्रमितुं। नापि क्षमति द्युतिकर-शाला सामन्तकेन चंक्रमितुं। वधबन्धनागारसामन्तेन चंक्रमितुं।

१. Ms. चक्रमियितु।
२. Ms. यदा निहिनकेन।
३. Ms. पीटं।
४. Ms. अनुवरि ।
५. Ms. वर्चितं।

नापि क्षमति अतिप्राकटे वा प्रदेशे चंक्रमितुं । अथ खलु च्छन्न-प्राकटे प्रदेशे [13. A. P. 4. L 6.] चंक्रमितव्यं । एवं चंक्रमे प्रतिपद्यि-तव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति । ते दानि आयुष्मन्तो षड्वर्गिकाः अर्ध[1]पर्यंकेन प्रहाणे उपविशति[2] । अनन्तरिकानां जानुकेहि व्याग्रहन्ति । एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु । भगवानाह—शब्दापयथ षड्वर्गि-कान्तेदानि शब्दापिताः । भगवानाह—सत्यं भिक्षवो षड्वर्गिका, एवं नाम यूयं अर्ध[3] पर्यंकेन प्रहाणे निषीदथ ? अनन्त-[13. A. P. 4. L. 1.]रिकानां जानुकेहि[4] व्याग्रहथ ? आहंसु—आम भगवन् । भगवानाह—दुष्कृतं भिक्षवो षड्वर्गिकाः[5] । एवं च यूयं अर्ध[6]पर्यंकेन प्रहाणे निषीदथ । तेन हि क्षमति अर्ध[7] पर्यङ्केन प्रहाणे निषीदितुं। भगवान् तान् भिक्षूनामामन्त्रयति—एवं भिक्षवो, निषीदथ यथा नागहिम-[13. A. P. 4 L. 1.]वताः । एकं नागं द्वे नागा अनुपरिवार्य[8] निषीदन्ति । द्वे नागां चत्वारि नागा अनुपरिवार्य निषीदन्ति । चत्वारि अष्ट । अष्ट षोडश । षोडश [ द्वात्रिंशत् । ] द्वात्रिंशच्चतुषष्ठि नागा अनुप[रि]वार्य निषीदन्ति ।

---

१. Ms. उष्ट॰ and subsequently only in one place it seems to be उष्ट्र॰, otherwise in all other places it is referred to as उष्ट॰, which is a very doubtful case against the स्वस्ति॰, which is recommended for monks. In 13B. P4. L5. it is अर्ध॰ which is adopted by us.

२. Ms. उपविंशति ।

३. Ms. उष्ट ।

४. Ms. जातकेहि ।

५. Ms. षड्वर्गकाः ।

६. Ms. उष्ट ।

७. Ms. उष्ट्र ।

८. Ms. अनुपरिधार्य ।

अथोत्तरेण यथानु[परि]वार्यं[1]। न क्षमति अर्ध[2]पर्यंकेन निषीदितुं। भिक्षुणापि ताव स्वस्तिपर्यंकेन प्रहाणे निषीदितव्यं। अथ दानि भिक्षू पर्यङ्केन निषण्णो भवति श्रान्तो भ[13. B. P. 4.L. 2.]वति घर्मानि[3] आमिलायन्ति[4]। नापि क्षमति उभयानि सन्धी मटमटाये प्रसारितुं। अथ खलु एको पादो सुखाकं प्रसारयितव्यो। तं आमुहूर्त्तं[5] विश्रामिय सम्मिञ्जिय द्वितीयो पादो सुखाकं प्रसारयितव्यो। उत्थिपित्वा वा एकान्तेन चंक्रमितव्यं। न क्षमति ओगुण्ठितशीर्षेण प्रहाणे उपवेष्टुं। अथ दानि जरा दुर्बलो वा व्याधि दुर्बलो वा भवति। शीर्षम्वा [13. B. P. 4.-L. 3.] दुःखति अर्ध शीर्षस्य पिथेतव्यं एको च कर्णो। अथ दानि एकान्ते भवति उच्छेदके वा वृक्षमूलके वा विहारे वा प्रतिसंलीनको। किञ्चापि ओगुण्ठितशीर्षो निषीदति अनापत्तिः। आमूहूर्त्तकं विश्रामिय भूयो स्वस्तिक पर्यङ्केन निषीदितव्यं। अथ दानि भिक्षु[6] न पारेति स्वस्तिकपर्यङ्केन निषी-दितुं। [13. B. P. 4. L. 4.][ अर्धपर्यङ्केन ] निषीदितव्यं। अथ दानि अर्धपर्यङ्केनापि न पारेति निषीदितुं। उभौ पादौ ओसारिय सुसंवृतेन निषी-दितव्यं तथा कर्त्तव्यं यथानन्तयं जानुकेहि न व्यावहति। न क्षमति स्तूपं पृष्ठतो करीय निषीदितुं। संघम्वा पृष्ठतो करीय निषीदितुं। उपाध्यायाचार्याणां वा पृष्ठतो करिय निषीदितुं [ वृद्धतरकं वा पृष्ठतो ][7] [13. B. P. 4. L. 5.] करीय निषीदितुं। नापि क्षमति संघमध्ये मा निषीदन्ति[8] उक्तेन समानेन

१. Ms. यथानुभावं।
२. Ms. उष्ट।
३. Ms. गर्भीनि।
४. Ms. अमिलायन्ति।
५. Ms. अमु।
६. Ms. भिक्षू।
७. The whole line in the Ms. is very clumsy.
८. Ms. निषीदन्ति।

निषीदितुं । नापि क्षमति उपाध्यायाचार्येहि मा निषीदन्ति[1] उक्तेन निषीदितुं । नापि क्षमति वेसिका सामन्तेन द्यु तिकरशाला सामन्तकेन निषीदितुं । वधबन्धनागारशाला सामन्तकेन निषीदितुं । अतिगुप्ते[2] वा [अति प्राकटे वा] प्रदेशे निषीदितुं । अथ खलुच्छन्नप्राकटे[3] [13. B. P. 4. L. 6.] प्रदेशे निषीदितव्यं । एवं निषद्ये प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यां विहरति । ते दानि आयुष्मन्तो षड्वर्गिकाः । ओमुद्धकापि[4] शेय्यां कल्पेन्ति । उत्तानकापि शेय्यां[5] कल्पेन्ति । वामेनापि पार्श्वेन शेय्यां कल्पेन्ति । एतं प्रकरणं भिक्षूहि श्रुतं । भिक्षू भगवतो आरोचयेंसु । भगवानाह—[13. B. P. 4. L. 7.] शब्दापयथ षड्वर्गिकां । ते दानि शब्दापिता । भगवानाह—सत्यं भिक्षवो षड्वर्गिकाः, एवं नाम यूयं ओमुद्धकापि[6] शेय्यां कल्पेथ । [ उत्तानकापि शेय्यं कल्पेथ । ] वामेनापि पार्श्वेन शेय्यां कल्पेथ ? आहंसु—आम भगवं । भगवानाह—दुष्कृतं वो भिक्षवो, षड्वर्गिकाः । तेन हि न क्षमति उत्तानकेन शेय्यां कल्पितुं । न क्षमति ओमुद्धकेन[7] शेय्यां कल्पियितुं । न क्षमति वामे-[13. A. P. 5 – L. 1.]न वा पार्श्वेन शेय्यां[8] कल्पयितुं । भगवान्दानि भिक्षूनामामन्त्रयति—

---

१. Ms. निषीदन्ति ।

२. Ms. अतिभुंड ।

३. The last few words in the line of the Ms. are not clear.

४. Ms. ओसुद्धकापि ।

५. Ms. शेय्या ।

६. Ms. ओसु ।

७. Ms. ओसुद्धका ।

८. Ms. शय्यां ।

ओमुद्धका[1] भिक्षवो, प्रेता शेय्यां कल्पयन्ति। उत्तानका भिक्षवो, आसुरा शेय्यां कल्पयन्ति। वामेन पार्श्वेन कामोपभोगेनो[2] शेय्यां कल्पयन्ति। एवं भिक्षवो, शेय्यां कल्पेथ यथा सिंहो मृगराज[ा]। सिंहो भिक्षवो, मृगराजा दक्षिणेन पार्श्वेन शेय्यां कल्पयति पादेन पादं[आधाय दन्तेन·[13 A. P. 5.-L. 2.] द]न्तं[3] आधाय जिह्वाग्रं तालुकाग्रे प्रतिष्ठापयित्वा अङ्गुलं अनुकायं आपच्छिहित्वा दक्षिणां वाहां[4] शिरस्युपनिधाय वामं वाहां अनुकायं प्रसारयित्वा। सोपि प्रतिवोधन्तेन[5] पुरिमं कायं[6] अभ्युन्नामेति। पृष्ठिमं कायं अभिविलोकयति। स चेत्पश्यति गात्राणामन्यथात्वं तेन भवति अनात्तमनो[7] च पश्यति। गात्राणामन्यथात्वं तेन भवति चित्ते [अमना]पो। [अ]भि-र[द्धो][8]। भिक्षुणापि ताव शेय्यां प्रज्ञपेंतेन[9] अतिदक्षिणां प्रज्ञपयितव्या। तथा[10] कर्त्तव्या यथा संयतको येव दक्षिणेन पार्श्वेन शय्यां कल्पेति। न क्षमति वामेन शय्यां प्रज्ञपेतुं। दक्षिणशय्या प्रज्ञपेतव्या चीवरवंशस्य हेट्ठतो। रात्रीये पुरिमं[11] यामं उद्देशप्रयुक्तेन स्वाध्यायप्रयुक्तेन स्थानेन

---

१. Ms. ओसुद्धका।

२. Ms. कालोपभोगेन च।

३. Seven letters from आधाय are illegible but restored from the subsequent lines.

४. Ms. वाह।

५. Ms. प्रतिवोधनां। तेन।

६. Ms. प्रविस॰।

७. Ms. अनातुमनो।

८. Letters are not at all clear here.

९. Ms. प्रज्ञपेतेन।

१०. Ms. यथा।

११. Should also be प्रथमं, but Ms. पुरिसं।

चंक्रमेण वी[तिनामयि][१]-[13.A. P. 5. L. 3.]तव्या। रात्रीये मध्यमे यामे दक्षिणेन पार्श्वेन सिंहशेय्या कल्पयितव्या। पादेनपादमाधाय जिह्वाग्रं तालुकाग्रे प्रतिष्ठापयित्वा दक्षिणां बाहां शिरस्युपनिधाय वामां बाहां अनुकायं प्रसारयित्वा उत्थानसंज्ञी मनसिकारेन्तेन। नापि दानि परिवर्त्तकं यावत्सूर्योद्गमनातो[१A] शयितव्यं। रात्रीये पश्चिमे यामे [13.A. P. 5. L. 5] [पर्यङ्केन[२] वीति]नामयितव्यं उद्देशप्रयुक्तेन स्थानचंक्रमानुयुक्तेन वा। अथ दानि भिक्षुः दुःखशायी भवति पार्श्वेन पार्श्वं पल्लदुन्तो शयति अनापत्तिः। जरादुर्बलो वा व्याधिदुर्बलो वा भवति। दक्षिणे पार्श्वे गण्डं वा पिटकं वा भवति किञ्चापि वामेन पार्श्वेन शयति अनापत्तिः। न क्षमति स्तूपं वा पादतो कृत्वा शय्यां कल्पयितुं संघं[३] [13. A. P. 5.-L. 6.] वा पादतो कृत्वा शय्यां कल्पयितुं। वृद्धतरकं वा पादतो कृत्वा उपाध्यायाचार्यं वा पादतो कृत्वा शेय्यां कल्पयितुं। एवं शय्याये[४] प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

## उद्दानं :—

एवं कठिने प्रतिपद्यितव्यं।
एवं चकलीये प्रतिपद्यितव्यं।
एवं विहारे प्रतिपद्यितव्यं।
एवं खेटे प्रतिपद्यितव्यं।

---

१. Ms. not legible.
१A. Ms. मनानुतो।
२. Six letters are not clear and started with यथा।
३. Ms. सच्यं।
४. Ms. शय्यं।

एवं पात्रे प्रतिपद्यितव्यं ।

एवं यवागुये[1] [13. A. P. 5. L. 1.] प्रतिपद्यितव्यं ।

एवं स्थातव्यं ।

एवं चंक्रमितव्यं ।

एवं निषीदितव्यं ।

एवं शेय्यां कल्पयितव्यं ॥३॥

॥ तृतीयो वर्गः ॥

१. Ms. यथाग्रये ।

# [ चतुर्थो वर्गः ]

भगवान् श्रावस्त्यां विहरति। विस्तरेण निदानं कृत्वा ते दानि आयुष्मन्तो षड्वर्गिकाः[1] द्वारं बन्धियाणं विहारस्य पश्चाद्वस्तुके काकवाहं भंजन्तं आसन्ति। आगन्तुकानां भिक्षूणां गणो आगतो। द्वारं यावत न[2] लभन्ति। ते दानि ओक्यन्दियाणं प्रविष्टाः। तेहि दाणि [13. B. P. 5.- L. 1.] आयुष्मन्तेहि षड्वर्गिकेहि[3] आगन्तुका दृष्टाः। पृच्छन्ति—आयुष्मं, कुतो वा प्रविष्टाः? आहंसुः—ओक्यन्दियाणं प्रविष्टाः। ते दानि आहंसु—आयुष्मान्, एवं च यूयं ओक्यन्दियाणं विहारं प्रविशथ? तेपि दानि आगन्तुका आहंसु—एवं च यूयं द्वारं बन्धियाणं विहारस्य पश्चाद्वस्तुकस्य काकवाहं भञ्जन्तां आसथ। ते दानि विवदिताः। भगवतो मूलं गताः। भगवानाह—ना[13. B. P. 5. L. 2]-यं ताव क्षमति नेवासिकेहि[4] विहारस्य द्वारं बन्धियाणं विहारस्य पश्चाद्वस्तुकस्य भंजमानेहि[5] आसितुं। नापि क्षमति आगन्तुकेहि विहारं ओक्यन्दियाणं प्रविशितुं। तेन हि एवं आगन्तुकेहि प्रतिपद्यितव्यं। एवं नेवासिकेहि प्रतिपद्यितव्यं। किन्तिदानि एवं आगन्तुकेहि प्रतिपद्यितव्यं? एते दानि भिक्षू आगन्तुका आगच्छन्ति। सर्वेहि उपकयातिता [13. B. P. 5. L. 3.] [अ]पावुरणानि उपस्थापयितव्यानि। एकस्यापि अपावुरणि न भवति सर्वे विनयातिक्रमं आसादयन्ति। एकस्यापि अपावुरणि भवति सर्वेषामनापत्तिः।

अथ दानि कोचि ग्लानो भवति न दानि उज्झित्वा गन्तव्यं। अथ खलु अनुपालेतव्यो। पात्रचीवरं आलम्बितव्यं। नापि दानि पात्र-

१. Ms. षड्वर्गकाः।
२. Ms. यावन्ति।
३. Ms. षड्वर्गि।
४. Ms. तेवसि°।
५. Ms. नं जमानेहि।

चीवरं गृह्णित्वा अदर्शनेन गन्तव्यं। अथ खलु [13. B. P. 5. L. 4.] अविदूरेण गन्तव्यं। मा दानि अदर्शनेन परिजाने हृतं। हृतं मे पात्रचीवरमिति गच्छन्तस्य कर्त्तव्यं। यदि दानि ओश्या भवति तरुण भिक्षूहि अग्रतो गन्तव्यं ओश्या प्रतिवाहन्तेहि। अथ दानि व्याघ्रभयं वा चोरभयं वा भवति। वृद्धं बालं मध्ये कृत्वा गन्तव्यं। अथ दानि चोरा सप्रसादा भवन्ति वृद्धेहि अग्रतो गन्तव्यं यथा पश्यित्वा सप्रसा-[13. B. P. 5. L.5.]-देन[१] अविवर्जिता गच्छेंसु। यदि दानि ग्रामस्य नगरस्य वा मध्येन गन्तव्यं भवति। न दानि चमति नगर चेतियानि[२] अभिदक्षिणि करेन्तेहि वा गन्तुं अपवामिका[३] करेन्तेहि वा। अथ खलु उज्जुकेन[४] मार्गकेन गन्तव्यं। न्याये[३A] वासोपगता भवन्ति। तरुणभिक्षू दुवे[५] वा त्रयो वा प्रवेशयितव्या। अग्रतो गच्छथ संघस्य फासुविहारं[६] उप-[13. B. P. 5. L. 6.]दहथ पादतैलेन गुडपानीयेन प्रतिश्रयेण पुरेभक्तिकेन। तेहि दानि प्रावरिय गण्ठिपासकं[७] आबन्धिय आमन्त्रिय[८] प्रवेष्टव्यं। प्रविशिय याचित्वा संघस्य यथासुख परिभोगं निःसारेयेतव्यं[९]। पादतैलं वेकालिकं पुरेभक्तिकं भवितव्यं। आविक्षितव्यं लब्धो प्रतिश्रयो। तेहि दानि यदि तहिं ओघो वा[१०]

१. Ms. य प्रमादेन।
२. Ms. वीतयानि।
३. Ms. अपरामिवा।
३A. Probably it is मार्गं।
४. Ms. उजकेन।
५. Ms. दूरे।
६. Ms. पासु।
७. Ms. गण्ड यासकं।
८. Ms. अमन्त्रिय।
९. Ms. ‘पेतव्यं।
१०. Ms. ओघोरा।

भवति नदी तडागं वा पुष्किरिणी वा उद्रुपानो वा। तहिं पादा-[13. B. P. 5. L. 7.]न् प्रक्षालेत्वा प्रावरेत्वा अन्योन्यं आमन्त्रयित्वा[1] प्रवेष्टव्यं। अथ दानि गुडपानीयं भवति तहिं येव वैकालिकं करिय प्रवेष्टव्यं। मा पश्येन्सु समासपयि इमे प्रव्रजिता करोन्ति। अथ दानि उभंडितो[2] भवति संविभजित्वा प्रवेष्टव्यं। निमृष्टगृहं भवति अनामन्त्रिय प्रविशति अनापत्तिः। न दानि लभ्या अन्येन गन्तुं। रच्छाच्छिद्रका भवति अनापत्तिः। ग्रामान्तिकं शेय्यासनं [13. A. P. 6. L. 1.] भवति तहिं गन्तव्यं। अथ दानि आरण्यकशेय्यासनं भवति तहिं गन्तव्यं। संघारामं प्रविशन्तेहि पुष्करिणीयं वा तडागे वा ओघे वा पादां धोवित्वा प्रवेष्टव्यं। अथ दानि उभंडितो[3] संविभजित्वा प्रवेष्टव्यं। चेतिया[ङ्ग]णं प्रदक्षिणी करेन्तेहि उपानहा ओमुञ्चित्वा काष्ठकेन गृह्णित्वा प्रवेष्टव्यं। नापि दानि उच्चशब्द-महाशब्देहि प्रवेष्टव्यं। नापि नेवासिकां उल्लपन्ते-[13. A. P. 6. L. 2.]हि [ प्रवेष्टव्यं ][4]। अद्यापि तं तदेवित्थ वसथ घुण, विद्धातवे नन्दनोपनन्दना। यूयं नागराजानो। इहैव यूयं जाता इहैव मरिष्यथ। जाता ते शृगाला ये तुम्भाणं मांसानि खादिष्यन्ति। नापि दानि निवासिकेन उल्लपितव्यं। हू ह हे[6] चण्डमुक्तं पञ्चवर्षिकं प्रवृत्तं यथापाटितो[7]। नापि दानि वक्तव्यं—को इत्थं? कति वर्षो? उत्थिह। नापि दानि

---

१. Ms. आमन्वयित्वा।

२. Ms. उतंडितो but in the Ms. it is उच्चंडितो। Still the meaning is not clear.

३. उच्चंडितो।

४. Ms. seems उल्लपल्ल but this and the next word, even this whole line is not clear enough to draw any understandable meaning.

५. Ms seems हू हहे।

६. This seems to be an the expression of vocal sound.

७. The meaning of the line is not clear.

वक्तव्यं-को भक्तकानातिथिका कस्य शुवे [भक्त-[13. A. P. 6. L. 3.]त]पणं [1]पुरो भक्तिकं वा। नापि दानि नेवासिकेहि द्वारं बन्धित्वा काकवाहां भजन्तेहि आसितव्यं।

अथ दानि पश्चाद्वस्तुके मृत्तिका कर्मं करोन्ति। ये ताये अर्थाये भवन्ति आरामिको श्रामणेरो वा यस्य ओहेय्यको सो वक्तव्यो—द्वारं रक्षन्तो आस[2]। अथ दानि आपदूरको[3] विहारो भवति प्रविशितव्यं। अथ दानि घट्टित्तको भवति अवापुर-[13. A. P. 6 L. 4.]णेन अपदूरियाणं प्रविशितव्यं। संघारामं प्रदक्षिणी करेन्तेहि आगन्तव्यं। यत्र भिक्षूणां आसनप्रज्ञप्तिर्भवति ( तहिं नवकं )[4] तस्मिं चीवर विसियन्थवियाणं कुण्डिकां वा उपानहौ वा थवियाणं[5] नेवासिका पृच्छितव्याः—आयुष्मं, पादधोवनिका कहिं? कल्पियकरकी कहिं? अकल्पियकरकी कहिं[6]? यदि ताव आविक्षन्ति[7] पादधोवनिकायां पादां-[13. A. P. 6. L. 5]धोवियाणं अकल्पियकरकीतो हस्तान्निर्मार्दियाण[8] कल्पियकरकीतो प्रक्षालिय ततो चेतियं वन्दितव्यं। चेतियं वन्दियाणं यत्र निवासिका भवन्ति तत्र गन्तव्यं। अल्लीयाणं नापि क्षमति वक्तुं वन्दामीति। अथ खलु वक्तव्यं—आयुष्मन्, वन्दिष्यन्ति। नेवासिकेहि वर्षाग्रं पृच्छितव्यं। कति वर्षा आयुष्मन्? यदि

---

१. Two letters in the middle are illegible.

२. Ms. आसा।

३. It is probably अवापूरको।

४. Bracketted two words seems to be superfluous.

५. Ms. यवियाण।

६. Ms. कहि।

७. Pali, आचिक्खन्ति = Sk. आचिक्षन्ति।

८. Ms. हस्ता निमी°।

ताव आगन्तुको वृद्धतरको भ-[13. A. P. 6. L. 6.]वति। नेवासिकेन उात्थय पादा वन्दितव्या। आसनं दातव्यं। अथ दानि नेवासिको वृद्धतरको भवति आगन्तुकेन[पि][1] एवं करियाण आसनं दातव्यं। यं कालं विश्रान्तो भवति पृच्छितव्यं—आयुष्मन्, अस्ति एतावति वर्षस्य। विहारको प्रापुणति। यदि ताव जल्पति—प्रापुणतित्ति विहारको गृह्णितव्यो। मञ्चपीठं विसि चतुरस्रको कुच्चं विम्बोहनं[2] गृह्णितव्यं। नापि [13. A. P. 6. L. 7.] दानि चमति तेहि[3] आगन्तुकेहि निवासिकां कुत्सिय हंतिय आयुष्मन्नद्यापि. यूयं इह वसथ। हे हे शिष्टा वष्टा यूयं जानाति[4] ये शृगाला ते[5] युष्माकं मांसानि खादिष्यन्ति। अथ खलु संप्रहर्षितव्या। वक्तव्या—आयुष्मन्, शोभनं क्रियति। संघारामो केलापीयति। धूमो क्रियति। कुलानि प्रशादीयन्ति। अविकालको पादां धोविय म्रक्षिय दीपं आदीपि-[13. B. P. 6. L. 1.]य शेय्यं[6] प्रज्ञपिय प्रतिक्रमितव्यं। नापि दानि चमति अपरेज्जुकातो कल्यतो उत्थिहन्तकेनैव भक्तशालां प्रविशितुं। आयुष्मन्, कि सिध्यति किं पच्यति किं भक्तकानां स्थितिका ? अथ खलु कल्यतो येव उत्थिय निवासिय प्रावरिय हस्तन्निर्मादिय[7] पात्रं गृह्णिय प्रविशितव्यं। अथ दानि तहिं विहारके अनुग्रहो भवति विहारकं वा भक्तं भवति निवासकेहि वक्तव्यं—आ-[13. B. - P. 6. L. 2.]युष्मन्, मा पिण्डाय प्रविशथ। इहय्येव[8] भुंजिष्यथ। अथ

१. Ms. आरोग्यपिय।
२. Ms. विवोहनं।
३. Ms. त्रिहि।
४. Ms. जानाते।
५. Ms. ये।
६. The last four words are not clear in Ms.
७. Ms. निर्मादियं।
८. Ms. इहय्येव।

दानि [ भक्तं न ][१] भवति आगन्तुकानां ( पिण्डकानां )[२] पिण्डभक्तानि उद्दिशितव्यानि । अथ दानि भक्तकानि उद्दिशितव्यानि[३] । अथ दानि भक्तकानि न भवन्ति नेवासिकेहि वक्तव्यं—आयुष्मं, आगमेथ । सहितका पिण्डाये प्रविशिष्यामः । ततो सहितकेहि प्रविशितव्यं[४] । अथ दानि आगन्तुका भिक्षू विहारं[५] आगता भवन्ति नायं [13. B. P. 6. L 3.] क्षमति निवासिकेहि वक्तुं—ओहहेना वा पञ्चवर्पि कडं यदुक्तं श्रमणमाता प्रजातातिं[६] । अथ खलु आगन्तुकानां एहि स्वागतं कर्त्तव्यं[७]—एतु आयुष्मन्तो, स्वागतमायुष्मन्तो, अनुरागतमायुष्मन्तो, मा[त्थ][८]श्रान्ता मा[त्थ][८]क्लान्ता पादां प्रक्षालेथ । हस्तां निर्मादेथ । पानीयं पिवथ । विश्रमथत्ति[९] । यदि ताव पुरे भक्ते आगता[१०] भवन्ति पुरे भ-[13. B. P. 6.-L. 4.]क्तिकेन छन्दयितव्याः । देशकाले आगता भवन्ति भक्तकृत्येन छन्दयितव्याः । विकाले आगता भवन्ति विकालिकेन छन्दयितव्याः । विकालको[११] उद्दिशितव्यो । मञ्चपीठं विसी चतुरस्रकं कुचकं[१२] विम्बोहनं

१. cf. 13B. P6. L5.

२. It is obviously a superfluous word.

३. The whole sentence seems to be doubtful.

४. Ms. प्रविशितव्य ।

५. Ms. विहार ।

६. First five letters are very clumsy and the whole sentence is doubtful one.

७. कर्त्तुं ।

८. cf. 13B. P7. L I. 5 & 6.

९. Ms. विश्रमयन्ति ।

१०. Ms. आमता ।

११. Ms. विकरको ।

१२. Ms. कुव्वकं ।

उद्दिशितव्यं। पादम्रक्षणेन[1] छन्दयितव्या। अथ अपरेज्जुकातो[2] यदि[3] ताव वाहिरकं भक्तं भवति अनुग्रहो वा भवति [13. B. P. 6. L. 5.] वक्तव्यं—आयुष्मं, मा पिण्डाये प्रविशथ। इहग्येव[4] भुंजिष्यथ। अथ दानि भक्तका न भवन्ति आगन्तुकां पिण्डभक्तकानि उद्दिशितव्यानि। अथ दानि पिण्डचारिको भवति। यं कालं आगन्तुका पिण्डा थेवरिय विहारं आगता भवन्ति। ततो यदि नेवासिकानां[5] व्यञ्जनानि भवन्ति खज्जकानि भवन्ति ततो यदि स्नेहको वा [13. B. P. 6. L. 6.] भवन्ति तेहि आगन्तुकानां सम्विभागो कर्त्तव्यो। अथ दानि एवं पि न भवति अन्त-मसतो यदि तहिं किञ्चि पिण्डचारिकं प्रणीततरकं भवति आगन्तुकानां सारणीयं कर्त्तव्यं। निवासिकेहि सर्वमारोचयितव्यं। वक्तव्यं—आयुष्मन्तो, अमुकं कुलं मा प्रविशथ। पात्रनिकुज्जनं संमुतीकृतं। अमुत्र शुनखा चण्डाः। अमुकं [ अश्रद्धां ][6] कु-[13. B. P. 6. L. 7.]लं[7]। या क्रिया आरोचयितव्या।

अथ दानि आरण्यकं शेय्यासनं भवति न क्षमति तेहि नेवासि-केहि[8] द्वारं च वन्धिय[9] विहारस्य पश्चाद्वस्तुके काकग्राहां भञ्जन्तेहि आसितुं। अथ दानि सिंहभयं वा भवति व्याघ्रभयं वा चोरभयं वा

---

१. Ms. प्रक्षणेन।
२. Ms. अपरेह्नकातो।
३. Ms. प्रदि।
४. Ms. प्येव।
५. Ms. निवासिकानां।
६. Two letters of the word are illegible in MSS.
७. Ms. अलं।
८. Ms निवा।
९. Ms. बन्धय।

भिक्षू च परिशुद्धका भवन्ति छायनिका वा लेपनिका वा करेन्ति किंचापि द्वारं घट्टेन्ति[१] अनापत्तिः। सर्वे ये च[२] गोच-[13. A. P. 7. L. 1.]रं प्रविशन्ति। किञ्चापि घट्टेन्ति अनापत्तिः। एको वा रक्षपालो दातव्यो वक्तव्यं—आयुष्मं[३], द्वारं बन्धिय द्वारकोष्ठकस्य उपरि आसाहि। यदि केचि आगन्तुका आगच्छेंसु ततो द्वारं ददेसि। तेन उपरि द्वारकोष्ठस्य आसितव्यं। यदि ताव केचि आगन्तुका आगच्छन्ति तेषां द्वारं दातव्यं। यं कालं ते नेवासिका निर्धाविता[४] भवन्ति नापि क्षमति तेहि नेवासि-[13. A. P. 7. L. 2.]केहि वक्तुं—आयुष्मं, एषा नावा मुच्यति। एषो सार्थो[५] प्रयातो। गच्छन्तु आयुष्मन्तो। गतं[६] मार्गस्य श्रेयो। अथ खलु समाश्वासितव्यं—वसन्तु आयुष्मन्तो, रमंतु आयुष्मन्तो। यदि ताव स्तूपिकेन वा कार्येण आगता भवन्ति स्तूपिकं कार्यं परिप्रापयितव्यं। सांघिकेन कार्येण आगता भवन्ति सांघिकं कार्यं परिप्रापयितव्यं। यं कालं परिप्राप्तकार्यं भ-[13. A. P. 7. L. 3.]वति यदि कोचि सार्थो[७] प्रयातो भवति ते भिक्षू वाणिजकस्य सार्थवाहस्य परिन्दितव्या। वक्तव्यं—उपसका, दानपति, इमे भिक्षवो त्वया सार्धं गमिष्यन्ति। इमे भिक्षू तव परिनिन्दिता भवन्तु। तेषां गच्छमानानं[८] पथ्योदनेन[९] वैकल्यं कर्त्तव्यं। एवं हि

१. Ms. घटेन्ति।
२. Should येव।
३. Ms. आयुष्म।
४. Ms. निर्धरिता।
५. Ms. साध्वो।
६. Ms. शतं।
७. Ms. सार्था।
८. Ms. गच्छमनोनां।
९. Ms. पश्यदनेन।

आगन्तुकेहि* प्रतिपद्यितव्यं । न प्रतिपद्यन्ति अभिसमाचारिकान्धर्मानति-क्रामति ॥३॥

भगवा-[13. A. P. 7. L. 4.]न् श्रावस्त्यां विहरति । अपरो दानि भिक्षुः आगन्तुको आगतो । तस्य दानि अपरो भिक्षुः वृद्धतरको परिज्ञातको भवति । सो च अपरेण भिक्षुणा सार्धं वाचोवाचिकां करोति । सो दानि आगन्तुको अल्लीपंतस्य[१] निवासिकस्य पादां वन्दन्ति । सो दानि अन्य विज्ञान समंनीत[२] समन्वाहरति । न तं प्रतिसंमोदति । सो दानि अप्रतिसंमोदिय ग-[13. A. P. 7. L. 5.]तो । ते दानि अपरकालेन उभये समागता । सो दानि स्थविरो पृच्छन्ति—आयुष्मं, केचिरोति[३] आगतस्य? आह— एवचिरो एवचिरो च । सो आह—आयुष्मन्, एवचिरो तव आगतस्य न च मे पादवन्दको उपसंक्रमसि । सोदानाह—वन्दिता मया तव पादा । त्वं च मम न प्रतिसंमोदेसि । सोदानाह—कदा वा किम्वा । सो दानाह—अमुकं दिव-[13. A. P. 7. L. 6.]सं[४] त्वं अमुकेन भिक्षुणा सार्धं वाचोवाचिं करोसि । तदा तत्र मया पादा वन्दिता । सो दानि आह—एवं आयुष्मन्, वाचोवाचिं करेन्तस्य पादां वन्दसि ? सो दानि आह—एवं च यं त्वं मम पादां वन्दितस्य[५] न प्रतिसंमोदिसि । ते दानि विवदिताः । भगवतो मूलं गताः । भगवानाह[६]—नायं ताव क्षमति आगन्तुकेन नेवासि-

---

* Should be निवासिकेहि ।

१. Ms. आल्लीय तस्य ।

२. Ms. समं मीन ।

३. Meanings of °चिरो in this and subsequent words are not clear enough.

४. Ms. देवसं ।

५. Ms. वन्धितस्य ।

६. Ms. तव ।

कस्य[1] वाचोवाचिं करेन्तस्य पादां वन्दितुं। नापि क्षमति पादेहि व-[13. A. P. 7. L. 7.]न्दियमाणेहि न प्रतिसंमोदितुं।

तेनहि एवं पादा वन्दितव्याः। एवं प्रतिसंमोदितव्यं। किन्तिदानि एवं पादा वन्दितव्या एवं प्रतिसंमोदितव्यं ? एषो दानि भिक्षु आगन्तुको आगतो भवति। तस्य कोचि भिक्षु परिज्ञातको भवति। सो च अपरेण भिक्षुणा सार्धं वाचोवाचिं करोति। नापि क्षमति तस्य तं वेलं पादां वन्दितुं। उश्वासम्वा उपविष्ठो[2] भवति न क्षमति तं वेलं पादां [13. B. P. 7. L. 1.] वन्दितुं। एवं प्रश्वासं करेन्तस्य दन्तकाष्ठं खादन्तस्य। स्नायति वा एकनिवसनो वा भवति। भक्तकृत्यं करोति। पुरे भक्तिकम्वा करोति। द्विभूमिकम्वा उक्रमति। त्वरितं वा अतिक्रमति। न क्षमति तं वेलं तस्य पादां वन्दितुं। न क्षमति मृत्तिकाकर्मं[3] करेन्तस्य॥ पे[4]॥ पात्रपाकं[5] ददन्तस्य। चीवरं धोवन्तस्य। रजनिका पचन्तस्य। चीवराणि सीवन्तस्य रंजेन्त-[13. B. P. 7. L. 2.]स्य। सल्ल परिकर्मम्वा करेन्तस्य। पादां धोवन्तस्य हस्तां निर्मादन्तस्य। चेतियं वन्दन्तस्य पात्रं तिमर्दिन्तस्य। धूमम्वा[6] पिवन्तस्य अक्षिणि वा अञ्जन्तस्य। पुस्तकं वाचन्तस्य पुस्तकं लिखन्तस्य। वर्चकुटीं[7] गच्छन्तस्य नग्नस्य वा।

---

१. Ms. निवा।
२. Ms. उपरिष्ठो।
३ Ms. कर्म।
४. Ms. ये।
५. Ms. पात्त°।
६. Ms. धूपम्वा।
७. Ms. वर्चकुटी।

एकनिवसनकेन वा। अथ खलु यं कालं समवस्थाये निपण्णो भवति तं वेलं अलीयाख्यं शीर्षेण पादां वन्दितव्या। कर्कट ग्रा-[13. B. P. 7. L.3.]-हिकाये वन्दितव्या। अन्धकारो वा उद्देशं देन्तस्य [वा] उद्दिशन्तस्य वा निवासन्तस्य वा चीवरं प्रावरन्तस्य [वा] त्वरितं वा गच्छन्तस्य। न क्षमति ओगुण्ठितकायेन। न क्षमति ओहितहस्तेन न क्षमति उपानहारुढेन सामीचीकरेन्तेन। न क्षमति जानुकेन वा जंघाहि वा वन्दितुं। अथ खलु पादा वन्दितव्या। पादां व-[13. B. P. 7. L. 4.]न्दन्तेन जानितव्यं यदि कस्यचि व्रणा भवति गण्डो वा पिटको वा। न दानि सहसा उत्पीडितव्यं[1]। अथ खलु तथा वन्दितव्यं यथा न दुःखापिये पादेहि वन्दयन्तेहि। न दानि श्रष्ठेन[2] विय आसितव्यं पादेहि वन्दयन्तेहि। अथ खलु प्रतिसंमोदयितव्यं स्वागतमायुष्मन्तो, अनुरागतमायुष्मन्तो, मासि[3] श्रान्तो मा-[13. B. P. 7. L. 5.]सि क्लान्तो। पादां पक्षालेहि। हस्तां निर्मादेहि। विश्रमाहि। यदि ताव पुरेभक्ते आगतो भवति पुरो भक्तिकेन छन्दयितव्यो। देशकाले आगतो भवति भक्तकृत्येन छ[न्द]यितव्यो। विकाले आगतो भवति विकालिकेन छन्दयितव्यो। यदि तावद्वस्तुकामो भवति पात्रचीवरं प्रतिसामयितव्यं। विहारको उद्दिशितव्यो [13. B. P. 7. L. 6.] अथ दानि गन्तुकामो भवति आह--अन्यत्र गमिष्यन्ति वक्तव्यं--गच्छाहित्ति। एवं पादा वन्दितव्या। एवं प्रतिसंमोदितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

---

१. Ms. उप्पीडितव्यं।

२. Ms. मेराटेन।

३. Ms. मासे।

भगवान् श्रावस्त्यां विहरति। विस्तरेण निदानं कृत्वा ते दानि आयुष्मन्तो षड्वर्गिकाः। गृहिआलापेन आलापेन्ति--अम्बे, अत्ते, भाव[१] भद्द[२], तात घो[३] हे हे। हो-[13 B. P. 7. L. 7.] किं भणसीति। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह--शब्दापयथ षड्वर्गिकां। ते दानि शब्दापिताः। भगवानाह--सत्यं भिक्षवो षड्वर्गिकाः, एवं नाम यूयं गृही आलापेन[४] आलापथ[४]। अम्ब, अत्त[५], भाव, भद्द। तात, हं[६] घो, हे हे, हो किं भणसीत्ति। आहंसु--आम भगवन्। भगवानाह-एवं यूयं गृहि आलापेन आलपेथ[७]। ते-[13. A. P. 8. L. 1.]नहि न क्षमति गृहि आलापेन आलापितुं तेन हि प्रतिसंमोदितव्यं।

आयुष्मन्दानि-उपाली कालज्ञो[८] वेलाज्ञो[९] समयज्ञो[१०] भगवन्तमुपसंक्रमिय पृच्छति-कथं भगवं, नवकेहि भिक्षूहि स्थविरा भिक्षू आलपितव्या? भगवानाह--आर्येति[११] वा भन्तेति वा आयुष्मन्तेति [वा]। स्थविरो दानि भगवन्तं पृच्छति--कथं भगवं,[१२] स्थविरेहिं भिक्षूहि नवका भिक्षू

१. Ms. is not clear here.
२. Ms. भद्दु।
३. Ms. अहं but Pali, हम्भो=हंभो।
४. Ms. आलो in both occasions.
५. Ms. अत्ते।
६. Ms. अहं घो।
७. Ms. आलपेथा।
८. Ms. कालज्ञो।
९. Ms. वेलज्ञो।
१०. Ms. समयज्ञो।
११. Ms. आलपेति, but cf.-Line after next 13A. P8. L4.
१२. Ms. भगवां।

[13. A. P. 8. L. 2.] आलपितव्या ? भगवानाह--नामेन वा गोत्रेण वा वर्णाग्रेन[१] वा। एषो दानि भिक्षुस्य उपाध्यायो वा आचार्यो वा शब्दापयति। नायं क्षमति गृहि आलपेन आलपितुं--हं घो, हे हे त्ति। अथ खलु नामेन वा गोत्रेण वा शब्दापयितव्यो। तेनापि न क्षमति गृहि आलपेन व्याहर्तुं--हा[२] किं भणासीति। अथ खलु वक्तव्यं--वन्दामि उपाध्यायं वा [13. A. P. 8. L. 3] आचार्यम्वा। किं आणपेसित्ति ? किं करेमित्ति[३] ? वृद्धतरको[४] शब्दापयति। नायं क्षमति हान्ति प्रव्याहरितुं। अथ खलु वक्तव्यं--आर्ये वा भन्ते वा आयुष्मन्ति वा। किं आणपेसीत्ति[५] किं करेमि ? एषो भिक्षु मातरं [वा] पितरं वा भगिनीम्वा शब्दापयितुकामो भवति। नायं क्षमति शब्दाययितुं अम्वेत्ति वा अत्तेति वा भद्देत्ति वा। अथ ख-[13 A. P. 8. L. 4.]लु सालोहिते ति [वा][६] शब्दापयितव्याः। अथ दानि भिक्षुस्य पिता वा भगिनी[७] वा शब्दापयति नायं क्षमति हा किं भणासीत्ति प्रव्याहर्तुं। अथ खलु वक्तव्यं--सालोहिते, किं आणपेसि ? किं करोमि ? एषो भिक्षुः उपासकां वा दानपतीनां वा विहारस्वामिनीं वा शब्दायितुंकामो[८] भवति नापि क्षमति अम्वेतिं वा अत्तेति वा भद्दे-[13. A. P. 8. L. 5.][ति वा]। अथ खलु उपासकक्केत्ति वा दानपतित्ति[९]

१. Ms. वर्णाग्रेण ।

२. Sometimes it is हो, but हा seems to be more appropriate.

३. Ms. करेसित्ति ।

४. Ms. वृहतरको ।

५. Ms. आणपेसिन्ति ।

६. The bracketted word is irrelevent here.

७. Ms. भगिनीं ।

८. Ms. शब्दापितुं ।

९. Ms. दानपच्चिति ।

वा विहारस्वामिनित्ति वा शब्दाययितव्यं। भिक्षू वा उपासकम्वा दानपतिम्वा शब्दापयितुकामो भवति। नापि क्षमति अम्वेत्ति वा अत्ते त्ति वा भद्दे त्ति वा आयुष्मं त्ति वा। अथ खलु दानपति त्ति वा। भिक्षू वा तेहि शब्दाययति नायं क्षमति हा किं भणामिति व्याहर्तुं। अथ खलु वक्तव्यं--सा-[13. A. P. 8. L. 6.]लोहिते, किं आणपेसि? किं करोमित्ति[2]?
ते एते गृही आलापेन आलपन्ति वा प्रव्याहरन्ति वा विनयातिक्रमं आसादयति। स्त्री वा पुरुषो वा महन्तो भवति न दानि मातापितृ कंठेन आलपितव्या महल्लको महल्लिकेति वा वक्तव्या। अथ दानि केचि पृच्छति--को ते उपाध्यायो को ते आचार्यो वा? न दानि वक्तव्यं[3]--अमुको आचार्यो अमुको-[13. A. P. 8. L. 7.]उपाध्यायो। अथ खलु वक्तव्यं--अर्थं[4] हेतोर्नाम गृह्णामि। अमुको मे उपाध्यायो। अमुको मे आचार्यो। [एवं] आलपितव्यं। एवं प्रव्याहर्त्तव्या। न प्रतिपद्यति अभिसमाचारिकान् धर्मान् अतिक्रामति ॥३॥

भगवान् श्रावस्त्यां विहरति। विस्तरेण निदानं कृत्वा क्षत्रियपर्षा[5] दानि सन्निपतिता कार्याणि करिष्यामन्ति। ते दानि आयुष्मन्तो नन्दनोपनन्द-[13. B. P. 8. L. 1.]ना आगच्छिय तेषां मध्ये निषण्णाः। ते दानि तेहि निषण्णेहि न पारेन्ति कार्याणि कर्तुं। [ते दानि] ओध्यायन्ति--पश्यथ भणे, वयं येव सन्निपतिता कार्याणि करिष्यामन्ति। इमेपि श्रमणका आगच्छिय मध्ये निषण्णाः। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं? भिक्षुहि श्रुतं।

१. Ms. दानपत्ति।
२. Ms. करोमित्ति।
३. Ms. वक्तव्या।
४. Ms. अथ।
५. Ms. पर्षा।

भिक्षु भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ नन्दनोपनन्दनां। ते दानि शब्दापिता। भगवानाह—सत्यं भि-[13 B. P. 8. L. 2.]क्षवो नन्दनोपनन्दना, एवन्नाम क्षत्रियपर्षाये[1] सन्निपतिता कार्याणि करिष्यामन्ति। यूयं दानि गच्छिय तेषां मध्ये निषण्णा। ते दानि तुम्भेहि निषण्णेहि न पारेन्ति कार्याणि कर्तुं। ते दानि ओध्यायन्ति—पश्यथ भणे, वयं पिच[1A] ताव निषण्णा कार्याणि करिष्यामन्ति। इमेपि श्रमणका [आ]-गच्छियाणं मध्ये निषण्णा। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। आहंसु—आम [13. B. - P. 8. L. 3.] भगवन्। भगवानाह— तेन हि एवं क्षत्रिय पर्षाये[2] किञ्चि कार्यं भवति। न क्षमति गतागतस्य उपसंक्रमितुं। अथ खलु ये तर्हि वृद्ध-तरका क्षत्रिया भवन्ति ते ताव [ प्रतिकृत्येव ] अल्लिपितव्या। वक्तव्यं—दीर्घायु, [ अस्ति मे ] क्षत्रिय पर्षाये[2] इमं च कार्यं। अल्लीपामिति। यदि तात्र ते जल्पन्ति—भन्ते, मा अल्लीपथत्ति[3]। न क्षमति अल्लीपितुं। अथ [13. B. P. 8. L. 4.] दानि जल्पन्ति—अल्लीपथत्ति[4]। अल्लीपितव्यं। नापि क्षमति छत्रेण[5] धार्यन्ते [न] उपानहाहि[6] वा ओवद्धाहि क्षत्रियपर्षाय-मुपसंक्रमितुं। अथ खलु एकान्तेन छत्रं[7] निक्षिपिय उपानहा ओमुंचिय[8]

---

१. Ms. °पर्यायि।
१A. Ms. ये।
२. Ms. °पर्यायि।
३. Ms. अल्लीपथन्ति।
४. Ms. अल्लीपथन्ति।
५. Ms. छात्रेन।
६. Ms. उपानहां हि।
७. Ms. छत्तं।
८. Ms. ओम्वंचिय।

ततो अल्लीपितव्यं। नापि दानि दर्शनोपचारे निक्षिपितव्यं। अथ खलु प्रतिकृत्येव निक्षिपितव्यं। दर्शनपथे उपसंक्रमि-[13. B. P. 8. L. 5.]त्वा न दानि वक्तव्यं—सुखम्भवन्तो, सुखमार्य[1]। अथ खलु आरोग्यापिय यादृशं आसनं दीयति तादृशे आसने उपविशितव्यं। नापि क्षमति आसने क्षिया-धर्ममापद्यितुं[2]। नापि क्षमति ते निन्दितुं—ये क्षत्रिया कुशला भवन्ति प्रागेव ते नैरयिका भवन्तीति। अथ खलु वक्तव्यं—क्षत्रिया नाम यूयं अग्रो वर्णो ज्येष्ठो वर्णो [ श्रेष्ठो वर्णो ]। [13. B. P. 8. L 6.] द्विहि कुलेहि तथागता अर्हन्तः सम्यक्सम्बुद्धाः उत्पद्यन्ति क्षत्रियकुले वा ब्राह्मणकुले वा। दूवे चक्राणि धर्मचक्रं बलचक्रं च। तवाहं हितोपसंहारेण रक्षावरण गुप्तिये सुखं च फासुकं[3] च विहरामि। कार्यङ्कृत्वा उत्थायासनतो गन्तव्यं। एवं क्षत्रियपर्षा उपसंक्रमितव्या। न प्रतिपद्यति अभिसमाचारिकान् धर्मान् अतिक्रामति ॥३॥ [13. B. P. 8. L. 7.]

भगवान् श्रावस्त्यां विहरति। विस्तरेण निदानं कृत्वा ब्राह्मणपर्षा[4] दानि सन्निपतिता कार्याणि करिष्यामोति। ते दानि आयुष्मन्तो नन्दनोप-नन्दना[5] आगच्छियाणं मध्ये निषण्णा। ते दानि तेहि निषण्णेहि न पारेन्ति कार्याणि कर्त्तुं। ते दानि ओध्यायन्ति। वयं पि च[6] तात्र निषण्णा कार्याणि करिष्यामन्ति। इमेपि[7] श्रमणका आगच्छियाणं[8] मध्ये निष-

१. Ms. सुखं मार्य।
२. Ms. क्षिपा धर्मा।
३. Ms. पयसुखं।
४. Ms. °पर्षी।
५. Ms. नन्दोपमनन्दना।
६. Ms. ये च।
७. Ms. इमिपि।
८. Ms. गच्छियाणं।

[14. A. P. 1. L. 1.]एणा। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। एतं प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ नन्दनोपनन्दनां। ते दानि शब्दापिता। भगवानाह— सत्यं भिक्षवो नन्दनोपनन्दना, एवं नाम ब्राह्मणपर्षा सन्निपतिता कार्याणि करिष्यामन्ति। यूयं दानि तेषां गच्छियाणं मध्ये निपएणा[1]। ते दानि तुम्भेहि निपएणेहि न पारे-[14. A. P. 1. L 2.]न्ति कार्याणि कर्त्तुं। ते दानि ओध्यायन्ति। पश्यथ भणे, वयं येव ताव निपएणा कार्याणि करिष्यामोति। इमेपि श्रमणका आगच्छियाण मध्ये निपएणका। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। आहंसु—आम भगवन्। भगवानाह— सत्यम्भिक्षवो जनो ओध्यायन्ति। तेन हि एवं ब्राह्मणपर्षा उपसंक्रमितव्या। किन्तिदानि [एवं] ब्राह्मणपर्षा उपसंक्रमितव्या? एतं दानि भिक्षुस्य किं [14. A. P. 1. L. 3.] चि ब्राह्मणपर्षायां[2] कार्यं भवति। नायं क्षमति गतागतस्य ब्राह्मणपर्षामुपसंक्रमितुं। अथ खलु ये तर्हि ब्राह्मणमहत्तरका भवन्ति। ते प्रतिकृत्येव उपसंक्रमितव्या। दीर्घायु, अस्ति मे किञ्चिद्ब्राह्मणपर्षायां कार्यं। अल्लीपामन्ति[3]। यदि ताव जल्पन्ति। भन्ते, मा अल्लीपथत्ति[4]। न क्षमति अल्लीपितुं। अथ दानि जल्पन्ति अल्लीपथन्ति[4]। ततो अल्लीपि-[14. A. P. 1. L. 4.]तव्यं। नापि दानि क्षमति छत्रेण वा धार्यन्तेन उपानहाहि [वा] आवद्धाहि ब्राह्मणपर्षामुपसंक्रमितुं[4A]। अथ खो छत्रोपानहां एकमन्ते[5] स्थपिय ब्राह्मणपर्षायामुपसंक्रमितव्यं। नापि दानि दर्शनोपचारे निक्षिपितव्यं। अथ खलु प्रतिकृत्येव

१. Ms. निषद्या।
२. Ms. पर्यायं।
३. Ms. अल्लियामन्ति।
४. Ms. अल्लीयामन्ति।
४A. Ms. अल्लीपितुं। But cf. P. 129, Last Line.
५. Ms. एकममनो।

निक्षिपितव्यं। दर्शनपथे उपसंक्रमित्वा न दानि वक्तव्यं — सुखं भवन्तो, सुखं आ-[14. A. P. 1. L. 5.]र्य[1]। अथ खलु आरोग्यापयित्वा [या]दृशं आसनं लभ्यति तादृशे आसने उपविशितव्यं। नायं क्षमति आसने क्षीया-धर्ममापद्यितुं। अथ खलु यादृशं[2] आसनं दीयति तादृशे उपविशितव्यं। नापि क्षमति ते निन्दितुं। माणवकस्य मानहतस्य। इह लोके भूतस्य कुक्कुटो शूकरो श्वानो शृगालो पञ्चमो मूष-[14. A. P. 1. L. 6.]को तिरयो[2A] षष्ठोत्ति। अथ खलु वक्तव्यं—ब्राह्मणा नाम यूयं अग्रो वर्णो ज्येष्ठो वर्णो श्रेष्ठो वर्णो। द्विहि कुलेहि तथागता अर्हन्तः सम्यक्सम्बुद्धाः लोके उत्पद्यन्ति। क्षत्रियकुले वा ब्राह्मणकुले वा। एवं कार्यं करिय गन्तव्यं। एवं ब्राह्मणपर्याये प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानति-क्रामति ॥३॥

भगवान् श्रावस्त्यांवि-[14. A. P. 1. L. 7.]हरति। गृहपति-पर्षादानि सन्निपतिता कार्याणि करिष्यामन्ति। आयुष्मन्तो नन्दनोप-नन्दना आगच्छिय तेषां मध्ये निषण्णा। ते दानि तेहि निषण्णेहि न पारेन्ति कार्याणि कर्त्तुं। ते दानि ओध्यायन्ति। पश्यथ भणे, वयं पि[3] ताव सन्नि-पतिता कार्याणि करिष्यामन्ति। इमेपि श्रमणका मध्ये आगच्छियाणं निषण्णाः। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। एतं [14. B. P. 1. L. 1.] प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ नन्दनोपनन्दनां। ते दानि शब्दापिताः। भगवानाह— सत्यं भिक्षवो, नन्दनोपनन्दना[4]। एवं नाम गृहपतिपर्षा सन्निपतिता कार्याणि करिष्या-

---

१. Ms. मार्य।
२. Ms. तादृशं।
२A. Probably it is तिर्यको।
३. Ms. ये।
४. Ms. नन्दपनन्दाना।

मन्ति । एतदेव सर्वं भगवां विस्तरेण प्रत्यारोचयति । यावत्पश्यथ भणे, वयं येव ताव सन्निपतिता कर्माणि करिष्याम-[14. B. P. 1. L. 2.]न्ति । इमेपि श्रमणका आगच्छिय मध्ये निपण्णा। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। आहंसु—आम भगवन् । भगवानाह— तेन हि इवं गृहपतिपर्षा[1] उपसंक्रमितव्या । किन्तिदानि गृहपतिपर्षा उपसंक्रमितव्या ? एतं दानि भिक्षुस्य गृहपतिपर्षायां किञ्चित्कार्यं भवति । न क्षमति गतागतस्य अल्लीपितुं । अथ खलु ये तत्र गृहपतिमहत्तरकाः भवन्ति । [14. B. P. 1. L.3] ते प्र[ति]कृत्येव ता-[व] प्रतिसरितव्या[2] । वक्तव्यं—दीर्घायु, अस्ति किञ्चि गृहपतिपर्षायां कार्यं । ( अल्लीपाम । मा )[3] अल्लीपामत्ति[4] । यदि ताव जल्पन्ति—भन्ते, मा अल्लीपथत्ति[5] । न क्षमति अल्लीपितुं । अथ दानि जल्पन्ति[6]—आल्लीपथन्ति । आल्लीपितव्यं । नापि क्षमति छत्रेण [वा] धार्यन्तेन उपानहाहि [वा] आवद्धाहि गृहपतिपर्षा उपसंक्रमितुं । अथ खलु एक-[14. B. P. - 1. L 4. ]मन्ते[7] छत्रोपानहां निक्षिपिय गृहपतिपर्षा उपसंक्रमितव्या । नापि दर्शनोपचारे निक्षिपितव्यं । अथ खलु प्र[ति]कृत्येव निक्षिपितव्यं । दर्शनपथे उपसंक्रमित्वा न दानि वक्तव्यं—सुखं भवन्तो, सुखं आर्य[8] । अथ खलु आरोग्यापिय यादृशं आसनं लभ्यते तादृशे आसने उपविशितव्यं।

---

१. Ms. गृहपतिपर्या ।

२. Different on other two occasions. Vide. 13B. P8. L4. and 14A. P1. L3. They are अल्लिपितव्या and उपसंक्रमितव्या respectively.

३. Bracketted words seem to be superfluous.

४. Ms. अल्लीयमोन्ति ।

५. Ms. अल्लीयथन्ति ।

६. Ms. जाल्पति ।

७. Ms. एकतमन्ते ।

८. Ms. मार्य !

L. 5.]ह-

भगवान् श्रावस्त्यां वि-[14. B. P. 1. L. 7.]हरति। तीर्थिकपर्षादानि[1] सन्निपतिता कार्याणि करिष्यामन्ति। ते दानि आयुष्मन्तो नन्दनोपनन्दना आगच्छियाणं तेषां[3] मध्ये निषण्णाः[2]। ते दानि तेहि निषण्णेहि न पारेन्ति कार्याणि कर्त्तुं। ते दानि ओध्यायन्ति—पश्यथ भणे, वयं[4] पि च[5] ताव सन्निपतिता कार्याणि करिष्यामत्ति[6]। इमेपि श्रमणका आगच्छिय मध्ये निषण्णा। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। [14. A. P. 2. L.1.] एतं प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ नन्दनोपनन्दनां। ते दानि शब्दापिता। भगवानाह— सत्यं भिक्षवो, नन्दनोपनन्दना। एवं नाम तीर्थिकपर्षा सन्निपतिता कार्याणि करिष्यामोन्ति। यूयं दाणि गच्छियाण तेषां मध्ये निषण्णा। तदेव सर्वं भगवाँ विस्तरेण प्रत्यारोचयति। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। आहंसु— आम भगवन्। भगवानाह— तेन हि एवं तीर्थिकपर्षा[7] उपसंक्रमितव्या। एतं दानि भिक्षुस्य किंचि तीर्थिकपर्षाये कार्यम्भवति। नायं क्षमति भिक्षुणा गतागतस्य तीर्थिकपर्षा उपसंक्रमितुं। अथ खलु प्रतिक्रत्येव ताव वृद्धतरका प्रतिसरितव्या। वक्तव्यं—आयुष्मं, अस्ति मे किञ्चि तीथिकपर्षाये कार्यं। अल्लीपामत्ति[8]। यदि [14. A. P. 2. L. 3.] ताव जल्पति—मा आल्ली·

6.] बहुकरा
शेय्यासन-
ब्रह्मचर्यं
व्या। एवं
प्रतिपद्यति

---

१. Ms. seems तीर्थपर्यीदानि, but three lettes are very clumsy.
२. Ms. निषण्णा।
३. Ms. तेषां गच्छिय।
४. Ms. चयं।
५. Ms. येवं। cf. The last three para .
६. Ms. करिष्यामोति।
७. Ms. तीर्थक°। This term in place of तीर्थिक is used throughout this topic.
८. Ms. आल्लीयामा आल्लीयथन्ति repetitions occurred on the last two occasions including here.

पथन्ति। न क्षमति अल्लीपितुं। अथ दानि जल्पन्ति—अल्लीपथन्ति। उपसंक्रमितव्यं। याव न दानि क्षमति आसने स्त्रियाधर्ममापद्यितुं[1]। अथ खलु यादृशं [आसनं] लभ्यते तादृशे उपविशिवव्यं। नापि क्षमति कुत्सितुम्वा पत्सितुम्वा[2]—अश्रद्धा तीर्थिकाः अह्रीका तीर्थिकाः अनोत्रापिनो तीर्थिकाः मिथ्यादृ-[14. A. P. 2. L. 4]ष्टिका तीर्थिकाः। कुसीदा हीनवीर्या[3] तीर्थिकाः दुःप्रज्ञा तीर्थिकाः। अथ खलु एवं वक्तव्यं—सर्वश्रामिणानोपवादे[4] कदाचित्त्रैविद्य[5]प्राप्ताः बहुश्रुता। यस्य प्रशंसा तमनुप्रशंशे। तेषां गुणमेव वदे न दोषन्ति। वक्तव्यं—दुष्करं गृहिलिङ्ग[6]परित्यागो। दुष्करं वस्तिसंयमो। दुष्करमरण्यवासो। एवं कार्यं करिय गन्तव्यं। एवं [14. A. P. 2. L. 5] तीर्थिकपर्षा उपसंक्रमितव्या। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्याम्विहरति एतं[7] दानि भिक्षुस्य आर्यपर्याये[8] कार्यम्भवति। नायं क्षमति गतागतस्य वृद्धान्तमुपसंक्रमितुं[9]। अथ खलु प्र[ति]क्रत्येव ताव उपाध्यायो वा आचार्यो वा आमन्त्रयितव्यो। वक्तव्यं—उपाध्यायाचार्य, संघस्य म-[14. A. P. 2. L. 6.]ध्यं [अस्ति] मे किञ्चित्कार्यं।

---

१. Ms. स्त्रिया।

२. Ms. यं सितुम्वा। cf. 1 B. P1. L4.

३. Ms. हीना वीर्या।

४. Ms. सर्वाग्रामिणा नोपवादे।

५. Ms. त्रोविद्य।

६. Ms. गृहिलिङ्गा।

७. Ms. एव।

८. Ms. आर्यपर्ये।

९. Ms. वृद्धान्तमुपक्रमितुं।

अल्लीपामि ? मा अल्लीपामित्ति ? उपाध्यायेन वा आचार्येण वा जानितव्यं— यदि ताव सो भवति उस्रेणको वा प्रवर्थको वा अनर्थकुशलो वा [ अन् ] अभिनीहारकुशलो वा कलहकारको वा भण्डनकारको वा [भाष्यकारको वा] अधिकरणो[1A] वा वक्तव्यं–मा अल्लीपाहित्ति । अथ दानि सो भवति भद्रको गुणवान् अनुद्धतो शिक्षा-[ 4. A. P. 2. L. 7.]कामो अनुकूलो अनुन्नतो अचपलो पृच्छतव्यो — किं कार्यं ? आह—अमुकम्वा अमुकम्वा । तेन जानितव्यं। यदि ताव तस्य दुग्रहो [भवति] वक्तव्यं— मा अल्लीप । अथ दानि तस्य सुग्रहो[1] भवति वक्तव्यं—अल्लीपत्ति,[2] अल्लीपितव्यं । अल्लीप[न्तो] वृद्धान्तातो प्रभृति सर्वेषां प्रणामो कर्त्तव्यो[3] । ये[4] वृद्धतरका यावद्वृद्धान्तं उक्कसियाणं[5] संघस्थविरो पृच्छितव्यो—अ-[14. B. P. 2. L. I.]मुकं मे कार्यं जल्पामित्ति ? संघस्थविरेण जानितव्यं— यदि ताव तस्य दुग्रहो भवति सो च भिक्षु भवति कलहकारको भण्डनकारको भाष्यकारो अधिकरणिको वा वक्तव्यं— मा जल्पाहित्ति । कस्मा[6] त्वं भिक्षूणां समग्राणां सहितानां संमोदमानानां अविवादमानानां[7] एकोद्देशकानां[8] क्षीरोदकीभूतानां शास्तुः शासनं दीपयमानानां सुखञ्च फासु [14. B. P. 2. L. 2.] विहरन्तानां कलहजातो भण्डनजातो विग्रहविवाद[पन्नो] विहरन्तो संघे कर्कशानि अधिकरणानि

---

१A Should be अधिकरणिको ।

१. Ms. संग्रहो ।

२. Ms. अल्लीयन्ति ।

३. Ms. कर्त्तव्यो ।

४. Ms. या ।

५. Ms. उक्कमियाणं ।

६. Ms. कस्य ।

७. Ms. अविवद° ।

८. Ms. एकोद्देशकारां ।

उत्पादयसि ? मा जल्पाहित्ति। अथ दानि तस्य सुग्रहो भवति। सो च भिक्षु भवति भद्रको गुणवान् शिक्षाकामो अनुद्धतो अनुन्नतो अचपलो अमुखरो अप्रगल्भो अप्रकीर्णवाचो। संघस्थविरेण वक्तव्यं—आयुष्मन्, जल्पथ यथाधर्मं [14. B. P. 2. L. 3.] यथाविनयं यथाशास्तुः शासनं ति। तेन कार्यं संघमध्ये आरोचयितव्यं। संघेन तत्कार्यं धर्मेण विनयेन शास्तुः शासनेन व्युपसमयितव्यं। व्युपशान्तं करिय सो भिक्षु पृच्छितव्यो—आयुष्मन्, किं व्युपशान्तं एतं कार्यं ? यदि तात्र आह— व्युपशान्तं वक्तव्यं—आयुष्मन्, सर्वं त्वं एतं कार्यं समग्रेण संघेन संव्युपशान्तं [14. B. P. 2. L. 4.] पुनः कर्माय उत्खोस्यसि[1]। पुनो चास्मि पर्षं उपक्रमेसि। संघो ते उत्तरे उप[वीक्षिष्य]तीति। यथासुखं करिय गन्तव्यं। एवं आर्यपर्षा उपसंक्रमितव्या। न प्रतिपद्यति अभिसमाचारिकान्धर्मानातिक्रामति।

## उद्दानं :—

एवं आगन्तुकेहि प्रतिपद्यितव्यं।
एवं निवासिकेहि प्रतिपद्यितव्यं।
एवं पादा वन्दितव्या।
एवं [14.B. P.2. L.5.] सम्मोदितव्यं।
एवं आलपितव्यं।
एवं प्रव्याहर्त्तव्यं।

---

१. Ms. उत्ताब्यसि।

एवं क्षत्रियपर्षा उपसंक्रमितव्या ।

एवं ब्राह्मणपर्षा उपसंक्रमितव्या ।

एवं गृहपतिपर्षा उपसंक्रमितव्या ।

एवं तोर्थेकपर्षा उपसंक्रमितव्या ।

एवमार्यापर्षा उपसंक्रनितव्या ।

॥ चतुर्थो वर्गः ॥

# [ पञ्चमो वर्गः ]

भगवान् सम्यक्सम्बुद्धो यदर्थं समुदागतो तमर्थमभिसम्भावयित्वा श्रावस्त्यांम्वि-[14 B. P. 2. L. 6.]हरति विस्तरेण निदानं कृत्वा याव आरण्यकं[१] तात्र शेय्यासनं ग्रामान्तिकञ्च एकभक्ततर्पणञ्च ग्रामान्तिके शेय्यासने आरण्यकानाञ्च ग्रामान्तिकानाञ्च अनुग्रहो साधीयति। तेहि दानि ग्रामान्तिकेहि प्रकृत्येव गण्डि आहनियाणं[२] स्थिताः। ते दानि आरण्यका देशकाले ग्रामान्तिकं शेय्यासनं आगता। आहंसु—आयुष्मं, देशकालो आहनथ[३] गण्डी गण्डी ते-[14. B. P. 2. L. 7.]दानि ग्रामान्तिका आहंसु। आहतापियं गण्डी। भुक्तं[४] पि [ अम्हेहि। ] ते दानि आहंसु—आयुष्मन्, एवं यूयं अत्यनुकाल्ये गण्डीं आहनिय भुञ्जथ। ते दानि ग्रामान्तिका आहंसु—एवं च यूयं अतितवर्गे आगच्छथ। ते दानि आरण्यकेहि अपरेज्जुकातो[५] कल्यतो येव[६] उत्थिहिय भक्तकानि सर्वाणि उच्छिष्टानि। ते दानि ग्रामान्तिका देशकालस्मिन्[७] कुलानि उपसंक्रम-[14. A. P. 3. L. 1.]न्ति। आहंसु—उपासिकेहि देथ भक्तानि। उच्छिष्टानि[७A] [भक्तानि] केन? आहंसु—आरण्यकेहि[८]। ते दानि तेषां आरण्यकानां आहंसु—आयुष्मन्, किन्दानि

१. Ms. आवश्यकं।
२. Ms. आहनिपाणं।
३. Ms. आह तर्थ।
४. Ms. भुक्त।
५. Ms. अपरेज्जुकातो।
६. Ms. ये वा।
७. Ms. °कालस्मिह।
७A. Ms. उक्हितानि।
८. Ms. आवश्यकेहि।

युष्माभिः सर्वाणि भक्तकानि उत्क्षिप्तानि[1] ? ते दानि आहंसु—तथा तुम्हेहि प्रतिकृत्येव गण्डीं आहनियाणं भुञ्जथ। ते दानि विवदिताः। भगवतो मूलं गताः। भगवानाह— नायं तावत्क्षमति प्रकृत्येव गण्डीं आहनियाणं भुञ्जि-[14. A. P. 3 L. 2.]तुं। नापि क्षमति अपरेहि कल्यतो येव सर्वाणि भक्तानि उत्क्षिपितुं।

तेन हि एवं आरण्यके विहारे प्रतिपद्यितव्यं। एवं ग्रामान्तिके विहारे प्रतिपद्यितव्यं। किन्ति दानि एवं आरण्यके विहारे प्रतिपद्यितव्यं ? एवं ग्रामा[न्ति]के विहारे प्रतिपद्यितव्यं ? एतं दानि ग्रामान्तिकं[2] च शेय्यासनं आरण्यकञ्च शेय्यासनं[3] एकभक्ततर्पणं भवति। ततो यदि ताव ग्रामान्तिके शे-[14. A. P. 3. L. 3.]य्यासने भक्तं पच्यति[4] न दानि क्षमति ग्रामान्ति-केहि प्रतिकृत्येव गण्डीं आहनियाणं चेतियं वन्दियाणं भुञ्जितुं। अथ खलु ग्रामान्तिकेहि द्वे थालीयो आद्राहयितव्या। या[4A] एका ग्रामान्तिकानां एका आरण्यकानां। [ या ] ग्रामान्तिकानां थाली तहिं तण्डुला प्रक्षिपि-तव्याः। या[4A] आरण्यकानां थाली यदि ताव आरण्यका आगता भवन्ति [ तहिं पि ] [14. A. P. 3. L. 4.] तण्डुला प्रक्षिपितव्याः। अथ दानि नागच्छन्ति। नापि क्षमति तहिं तण्डुलानि प्रक्षिपितुं। अथ खलु एकान्ते थपितव्या। एकेन भिक्षुणा विहारकं उक्कसिय निर्धावितव्यं[6]। यदि ताव

१. Ms. उत्पितानि।

२. Ms. ग्रामान्तिके।

३. Ms. शेय्यासनं च।

४. Ms. भक्तस्य च्यति।

४A. या here seems to be superfluous. cf. p. 144.

५. Ms कटन्ती।

६. Ms. निध्यायितव्यं।

आरण्यका आगच्छन्ति वक्तव्यं—आयुष्मन्, एते आरण्यका आगच्छन्ति प्रतिपथ तण्डुलानि। अथ दानि कालपर्यन्तं नागच्छन्ति। ग्रामान्तिकेहि गण्डीं आहनि-[14. A. P. 3. L. 5]याणं भुञ्जितव्यं। आरण्यकानां स्थाली ओतारियाणं धोवियाणं[1] स्थाने स्थापयितव्या। अनेकाये आरण्यकानां चोरभयं[2] वा भवेय उदकभयं वा सिंहभयं वा व्याघ्रभयं वा यथापि ते न गच्छन्ति।

यदि कोचि उपासको संघं भक्तेन निमन्त्रयति। आह— आर्ये,[3] आरण्यकानां पि आरोचेथत्ति[4]। तेहि दानि ग्रामान्तिकेहि आरण्यकानां [14. A. P. 3. L. 6.] पि आरोचितव्यं। आयुष्मं, शुवे भक्तं वा पुरेभक्तिकं वा यवागुपानं[5] वा भविष्यति। मा पिण्डकेन विहरिष्यथ अन्ततोय्येत्र आगच्छथ। तेहि पि दानि आरण्यकेहि न विघ्नयितव्यं। यदि अर्थिका भविष्यन्ति प्रतिपालयिष्यन्तीति। अथ खलु कालेन कालं गन्तव्यं। यदि न संज्जं भवति न दानि भक्ताग्रं अवष्टंभयितव्यो आसयितव्यं। अथ खलु चेतियं वन्दित्वा एकान्ते [14. A. P. 3. L. 7.] स्वाध्यायो कर्त्तव्यो। धर्मम्वा चिन्तयन्तेहि आसितव्यं। एषो दानि कोचि ग्रामान्तिकां भक्तेन निमन्त्रेति। वक्तव्यं—आरण्यकानां पि निमन्त्रेहित्ति। अथ दानि आह— नास्ति मम तहि श्रद्धा नापि प्रसादोत्ति वक्तव्यं— वयं पि न प्रतिच्छामेत्ति। अथ दानि आरण्यकानां पि निमन्त्रेति भक्तं सज्जयितव्यं

---

१. Ms. वोधियाण।

२. Ms. चोभयं।

३. Ms. आर्यो।

४. Ms. आरोचेयन्ति।

५. Ms. यानं।

पानीयं परिश्रावयितव्यं । आसनप्रज्ञप्ति कर्त्तव्या । दानपति आगतो भवति [14. B. P. 3. L. 7.] आरण्यका च नागच्छति । दानपती आह— भन्ते, आहनेथ गण्डीं । कालोपि[1A] ताव अद्यापि भवति । वक्तव्यं-प्रागो ताव अद्यापि आरण्यकापि ताव नागच्छन्ति । अथ दानि दानपती आह— भन्ते, आहनेथ तुम्हे । आरण्यकापि एष्यन्तीति । किं कर्त्तव्यं ? गण्डी ताव विस्तरेण आहनियाणं चेतियो विस्तरेण वन्दितव्यो । चेतियं विस्तरेण वन्दियाणं यदि ताव आरण्यका आग-[14. B. P. 3. L. 2.]ता भवन्ति ततो भुञ्जितव्यं[2] । अथ दानि आरण्यका नागता भवन्ति अनन्तरिकानां आसनानि वर्जन्तेहि आसितव्यं । परिवेशिकेन[3] पृच्छितव्यं—को आरण्यकानां लाभग्राहो ? यदि ताव जल्पन्ति— अहं पि अहं पि त्ति वक्तव्यं— आरण्यकानां पिण्डपातं उक्कड्ढथ[4] । तेहि आरण्यकानां पिण्डपातो उक्कड्ढयितव्यो । उक्कड्ढियाणं सांघिकं कल्पियकुटीयं स्थाप[14. B. P. 3. L. 3.]-यितव्यो । यदि तावत्सकाले आगच्छन्ति भुञ्जनाय दातव्यो । अथ दानि विकाले आगच्छन्ति न वा गच्छन्ति अपरेज्जुकातो श्रामणेराणां दातव्यं । नापि दानि क्षमति आरण्यकेहि यत्रोल्लग्नाये[5] आसितुं । अथ खलु कालेन कालं ग्रामान्तिकं शेय्यासनं गन्तव्यं । आगच्छिय[6] पादां धोविय हस्तां निर्मादिय चेतियो[7] विस्तरे-[14. B. P. 3. L. 4.]ण वन्दितव्यो । यदि

---

१A. It is अनुकाल्यो in page 145 [ 14A. P4 L2. ]

१. Ms. वेति । यो

२. Ms. भुलितव्यं ।

३. Ms. परिवेशावकेन ।

४. But Ms. is not clear,

५. Ms. यत्र पुल्लुगिकाये, but Ms. is not clear enough. cf. 14A. P4, L6.

६. Ms. आगच्छेय ।

७. Ms. चेति । यो

ताव अनुकल्यो[1] अद्यापि ताव भवति। तत्रैव स्थान–चंक्रम–निषद्यायोग-मनुयुक्तेन विहरितव्यं। उद्देशप्रयुक्तेहि वा मनसिकारप्रयुक्तेहि वा। अथ दानि देशकालो भवति संघारामं प्रविशियाणं ग्रामान्तिकं भिक्षुं प्रतिसंमोदियाणं स्वकस्वकेहि आसनेहि उपविशितव्यं। गण्डी आहतायं वन्दी-[14. B. P. 3. L. 5.]य चेतियं[2]। नापि दानि आरण्यकेहि ग्रामान्तिका कुत्सितव्या। बहुकृत्या बहुकरणीय जिह्वाग्रे यूयं रसाग्राणि पर्येषथ। अथ खलु संराधयितव्या। वक्तव्यं—आयुष्मन्, सोभनं क्रियति बहुकरा यूयं भारं वहथ। धर्मदेशनां करेथ। संघारामो केलापीयति। धूमो क्रियति। कुलानि प्रसादीयन्तीति। एवं संराधयितव्याः।

अथ [14. B. P. 3. L. 6.] दानि आरण्यके शेय्यासने[3] ग्रामान्तकानां च आरण्यकानाञ्च भक्तं सज्जीयति। नापि दानि क्षमति आरण्यकेहि पि प्रतिकृत्येव गण्डिं आहनियाणं चेतियं वन्दिय[णं] भुञ्जितुं। अथ खलु दुवे स्थालीयो अद्राहयितव्यायो। एका आरण्यकानां एका ग्रामान्तिकानां। या आरण्यकानां स्थाली तहिं तण्डुला प्रक्षिपितव्याः। या ग्रामान्तिकानां स्थाली यदि ताव ग्रामान्तिका [14. B. P. 3. L 7.] आगता भवन्ति तहिं पि तण्डुला प्रक्षिपितव्याः। अथ दानि ग्रामान्तिका नागच्छन्ति। न क्षमति तहिं तण्डुला प्रक्षिपितुं। जानितव्यं अनेकाये ग्रामान्तिकानां ग्रामो परो वा भवे चोरा[4] वा पतिता भवेंसु। यथा नागच्छन्तीति। एकेन भिक्षुणा विहारं उकासियाणं निर्धावन्तेन[5] आसितव्यं किं ग्रामान्तिका

---

१. Ms. अनुकल्पो।
२. Should be चेतियं वन्दिय। There is also one extra यं।
३. Ms. शिय्यासने।
४. Ms. चोरो।
५. Ms निव्यायन्तेन।

आगच्छन्ति । तेषाम्पि [14. A. P. 4. L. 1.] तण्डुला प्रक्षिपितव्या । अथ दानि नागच्छन्ति देशकाले गण्डि आहनिय चेतियं वन्दिय भुञ्जितव्यं । ग्रामान्तिका थालीयो धोविय[१] लिप्तोपलिप्तां[२] करिय थपितव्याः । एषो दानि कोचि आरण्यकानां भक्तेनोपनिमन्त्रियति[३] । वक्तव्यं—ग्रामान्तिकानामपि निमन्त्रेहीत्ति । अथ दानि आहंसु— नास्ति मम तहिं[४] श्रद्धा नास्ति प्रसादो वक्तव्यं—वयं पि न प्रतिच्छामोत्ति । अथ दानि [14. A. P. 4. L. 2.] ग्रामान्तिकानामपि निमन्त्रेति भक्तं सज्ञयितव्यं[५] । आसन प्रज्ञप्तिः कर्त्तव्या । पानीयं परिश्रावयितव्यं । पुष्पं सज्ञयितव्यं । गन्धो सज्ञयितव्यो । यदि ताव ग्रामान्तिका नागच्छन्ति दानपतिरागतो भवति । आह— भन्ते, आहणथ गण्डि । अनुकाल्यो व तात्र अद्यापि भवति । वक्तव्यं–प्राणो[६] ताव अद्यापि ग्रामान्तिका च भिक्षवो नागच्छन्ति । अथ दानि आह— आहणथ [14. A. P. 4. L. 3.] तुम्हे[७] ग्रामान्तिकापि एष्यन्तीति । किं कर्त्तव्यं ? गण्डी ताव विस्तरेण आहनियाणं[८] चेतियो[९] विस्तरेण वन्दितव्यो । चेतियो[१०] विस्तरेण वन्दियाणं यदि ताव ग्रामान्तिका आगता भवन्ति भुञ्जितव्यं । अथ दानि ग्रामान्तिका नागच्छन्ति । आसनानि

---

१ Ms. भाविय ।

२. Ms थालो पलिप्रां ।

३ Ms. भक्तिनो° ।

४. Ms. तं हि ।

५. Ms. संज्ञपितव्यं ।

६. Ms. प्राणो ।

७. Ms. तुमे ।

८. Ms. आह । निया/णं

९. Ms. वे ति यो ।

१०. Ms. वेति ।

वर्जयन्तेहि[1] उपविशितव्यं परिवेशिकेन[2] वक्तव्यं — को ग्रामान्तिकानां भिक्षूणां लाभग्राही ? यदि ताव आ-[14. A. P. 4. L. 4.]हंसु— अहं पि अहं पि त्ति, वक्तव्यं—ग्रामान्तिकानां भिक्षूणां पिण्डपातं परिगृह्णथत्ति[3] । अथ दानि तेषां न कोचि लाभग्राहको भवति । परिवेशिकेन[4] सर्वेषां एक-स्थाने पिण्डपातं उक्कड्ढियाणं सांघिकायं कल्पियकुटीयं थपितव्यो । यदि ताव काले आगच्छन्ति भुञ्जनाय दातव्यं । अथ दानि विकाले आगता भवन्ति न वा आगच्छन्ति । अपरेज्जु-[14. A. P. 4. L. 5.]कातो श्रामणेराणां वा आरामिकानाम्वा दातव्यो । नापि दानि क्षमति यत्रोल्लग्नाये आसितुं । अथ खलु कालेन कालं आरण्यकं शेय्यासनं उक्कसितव्यं[5] । पादां प्रक्षालिय हस्ता निर्मादिय स्तूपं विस्तरेण वन्दितव्यं । यदि ताव अनुकल्यो[6] भवति आरामेहि वृक्षमूलेहि चंक्रमेहि निषद्याहि स्थान-चंक्रम- निषद्यानु-[14. A. P. 4. L. 6.]योगमनुयुक्तेहि वीतिनामयितव्या । उद्देशप्रयुक्तेहि वा मनसिकारप्रयुक्तेहि वा । अथ दानि देशकालो भवति विहारं प्रविशियाणं आरण्यकां भिक्षुं प्रतिसंमोदियाणं[7] स्वकस्वकेहि आसनेहि उपविशितव्यं । गण्डीयं आहताय स्तूपं वन्दियाणं भुंजियाणं गन्तव्यं । नापि दानि ग्रामान्तिकेहि आरण्यका कुत्सितव्या पंत्सितव्या[8]—

१. Ms. वलयतेहि ।

२. Ms. परियपकेन ।

३. Ms. परिग्रह्णथन्ति ।

४. Ms. परिवेपकेन ।

५. Probably it is उक्कमितव्यं । But in another place it is गन्तव्यं । cf. 14B. P3. L4.

६. Ms. अनूकल्यो ।

७. Ms. °संमेदियाणं !

८. Ms. पंसितव्या ।

शून्यागारगता[१] यूयं प्रज्ञा-[14. A. P. 4. L. 7.]वैतच्चिय[२]। शृगालापि आरण्ये वसन्ति। दिवसं यूयं[३] वर्षाणि पिण्डेन्ता आसथ। अथ खलु वक्तव्या—दुरावासकानि आरण्यकानि शेय्यासनानि प्राप्तानि विवक्तानि विगतजनपदानि मनुष्यरहशय्यकानि प्रतिसंलयन[४] सारोप्यानि। दुष्करंप्रविवेकेन[५] दुरभिरमं एकं परं रात्रि विनयमानो मानसं अध्यात्मं वेति। आयुष्मन्, शोभनं क्रियति आरण्यकं शेय्या-[14. B. P. 4. L. 1.]सनं केलापीयति। उक्तं चेदं भगवता यावकीयं[६] च भिक्षवो, आरण्यकानि शेय्यासनानि अध्यावसिष्यथ तात्र वृद्धीयेव प्रतिकांक्षितव्या कुशलेहि धर्मेहि। नो परिहाणि। न च वो मारः पापीमां[७] अवतारमधिगमिष्यति। सद्धर्मस्य अन्तर्धानाय संमोहायन्ति। एवं संराधिय[८] गन्तव्यं। एवं आरण्यकेहि प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रा[14. B. P. 4. L. 3.]मति ॥३॥

भगवान् श्रावस्त्याम्विहरति। तेन दानि कालेन तेन समयेन आयुष्मन्तो नन्दनोपनन्दना पानीयं प्रतिजागरन्ति। ते दानि भिक्षू ततोय्येव मुखं ततोय्येव हस्तां निर्मादियन्ति पात्रपरिश्रावणानि धोवन्ति। ते दानि कल्यतो येव नन्दनोपनन्दना उत्थियाण हस्तां निर्मादिय पानीयं परिश्राविय

१. Ms. शून्यागार माता।
२. प्रज्ञापयेथ gives some meaning.
३. Ms. भूयं।
४. Ms. प्रतिसंलपन, Pali–पटिसल्लान।
५. Ms. पतिविकेन, Pali–पविवेक°।
६. Pali–यावकीवं।
७. Ms. पारीयां।
८. Ms. संराविय।

पानीयमण्डपं परिघट्टिय तापितमुद्रितं करिय गोचरं [14. B. P. 4. L. 3.] प्रविष्टाः। आगन्तुका भिक्षू आगताः पानीयं मार्गेन्ति। न लभेन्ति ते दानि ओध्यायन्ति किन्दानि अयं पानीयमण्डपो तापित[1]मुद्रितो [करिय] थपितो? एतं प्रकरणं भिक्षुहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापय्यथ नन्दनोपनन्दनां। ते दानि शब्दापिताः। भगवानाह—सत्यं भिक्षवो नन्दनोपनन्दना ॥पे॥ याव आगन्तुका-[14. B. P. 4. L. 4.]नां भिक्षूणां गणो आगतो, पानीयं मार्गन्ति। न लभन्ति ते दानि ओध्यायन्ति। किन्दानि अयं पानीयमण्डपो तापितमुद्रितो करिय थापितो। आहंसु—आम भगवन्। भगवानाह—तेन हि एवं पानीये प्रतिपद्यितव्यं। एवं पादधोवनीये प्रतिपद्यितव्यं। किन्तिदानि एवं पानीये प्रतिपद्यितव्यं एवं पादधोवनीये प्रतिपद्यितव्यं? नायं क्षमति [14 B. P. 4.L. 5.] पानीयं परिश्राविय पानीयमण्डपं घट्टिय तापितमुद्रितं करिय अन्येन गन्तुं। अथ खलु पानीयवारिको ताव उद्दिशितव्यो। नवकान्ते पटिपाटिकाय वा यस्य वा प्रापुणाति। एको वा द्वयो वा त्रयो वा यत्तका[2] वा अभिसंश्रुणन्ति। तेहि कल्यत एव उत्थिय हस्तां निर्मादिय पानीयं परिश्राविय गोलका वा मणिका वा उष्ट्रिका [14. B. P. 4. L. 6.] वा थगनका वा आरंजरा वा घट्टा वा करकीयो वा अप्पिहाणा कर्त्तव्या। शीलमया वा मृत्तिकामया वा काष्ठमया वा अच्छिहि वा चेलपट्टेहि[3] वा बन्धितव्या। सो[4] सुभाविता करिय थपेतव्या यथा पानीयं चौक्षं भवेय। न दानि

---

१. Ms. तपित।

२. Ms. यतुका।

३ Ms. चेलपट्टेहि।

४. Ms. यो।

५. Ms. यथा।

कुक्कुट पाशकेन बन्धित्वा स्थपेतव्यं। तेहि भाजनेहि प्रत्तिपितव्या। पाटलगुलिका वा चम्पकगुलिका वा शर्करा वा सर्वङ्क-[14. B. P. 4.-L. 7.]र्तव्यं यथा सुगन्धा भवेंसु। ततो यदि तात्र अन्यं पिवनाय पानीयं भवति अन्यं पादधोव्रनीयं। परिश्रावितव्यं। परिधोव्रनीयेन[1] पानीयेन शिरि-कुण्डिका पूरयितव्या। अकल्पिय[2] कर्करी पूरयितव्या। पादधोव्रनिका पूरयितव्या। वर्चकुम्भिका[3] पूरयितव्या। भिक्षूणां हस्तोदकस्य पादोद-कस्य[4] परिभोगिकस्य कुम्भिका च करका च पूरयितव्या। गो[5] [14. A. P.-5. L. 1.] गोत्रस्थपानीयं[6] भवति यथा पाटलिपुत्रे शोणपानीयं, राजगृहे तपोदं[7], वाराणस्यां दुद्धविचीर्णा नाम पुष्किरिणी, चम्पायां गंगापानीयं, श्रावस्त्यां पेतलेयं[8], शाकेते घरपानीयं, मथुरायां यमुना। न क्षमति ततो पानीयातो कल्पिय करकी वा अकल्पिय करकी वा पूरयितुं हस्तोदक-पादोदकं वा पानीयं दातुं। अथ खलु ततो पिवनाये[8A] [14. A. P. 5. L.2.] दातव्यं। अथ दानि श्राद्धो भिक्षुर्भवति। ततो एव श्रीकुण्डिकां[9] पूरेति अनापत्तिः। भिक्षुस्य चक्षु दुःखन्ति, वैद्यो आह— भन्ते, गोत्रस्थेन पानीयेन अक्षिणि धोवाहित्ति लभ्यादानि[10] पात्रपूरं वा। एषो दानि

---

१. Ms. परिबोधनीयेन।

२. Ms. आकंप्य।

३. Ms. कुन्तिका।

४. Ms. पाचोढकस्य।

५. This letter might be a copying mistake.

६. Ms. गत्रस्थपनीयं।

७. Ms. तपोभं।

८. Ms. ये तलेयं। Probably it is प्रेतलेय्यं।

८A. Ms. पिवनापि।

९. Also शिरि cf. 14A. P5. L1.

१०. Ms. दाने।

धोवनिकां वा रजनिकाम्वा करेति। तस्य उदकेन कार्यम्भवति। पानीय धारिकां याचति इच्छामि पानीयं। दीयमानम्पि न क्षमति गोत्रस्थं उदकं दातुं। अथ [14. A. P. 5. L. 3.] खलु परिधोवनीयं उदकं दातव्यं। भक्ताग्रेण पानीयं चारेन्तेन हस्तां सुनिर्मादितां कृत्वा भाजनं सुनिर्मादितं कृत्वा चोक्षं पानीयं चारेतव्यं। पानीयं गृह्णन्तेन घत्तितव्यं। यथा एकहस्तो निरामिषो भवति। अथ दानि सहसाकारेण सामिषीकृतो भवति। प्रक्षालयित्वा पत्र[1] शाखाय वा पात्रं वा ओद्धाति-[14. A P. 5. L. 4.]क्रणं[2] भवति निर्मादयित्वा पातव्यं। न दानि अति बहु ओष्ठ प्रक्षिपितव्या। केशा वा आलिहितुम्वा निडालम्वा। अथ खलु ओष्ठ प्रमार्जित्वा अग्रोष्ठेहि पातव्यं। ततोय्येव स्तोकं वर्जयितव्यं। तेनैव अन्तेन प्रक्षालयन्तेन उज्झितव्यं। पानीयं चारेन्तेन उपलक्षयितव्यं। यदि कोचि अतिवद्धं ओष्ठं वा वोलपति केशा वा आलयं-[14. A. P. 5. L. 5.]ति। निलाटे वा अपनेतव्यं। तं भाजनं एकान्ते स्थापित्वा तृणं वा कुलिकं वा उपरि दातव्या अभिज्ञानं। यथाज्ञाये अकल्पियन्ति पुनो वा निर्मादयितव्यं पश्चाद्भक्तं पानीयं चारेन्तेन हस्तां सुनिर्मादिता करिय ॥पे॥ यात्र एकेन हस्तेन पानीयं परिगृह्णितव्यं। अपरेण पानीयघटिकां पटिच्छन्तेन चीवरंतरिकाय वा पात्रान्तरिकाये[3] [14. A. P. 5. L. 6.] वा गृह्णितव्यं। ताव तेनैव अन्तरकेन उज्झितव्यं। जेन्ताके चारेन्तेन ओष्ठा पानीयधारिकाये पात्रं वन्धितव्यं[4]। पिबन्तेन ओष्ठा पत्रशाखाये[5] निर्मादयित्वा अग्रोष्ठकेहि पातव्यं ॥पे॥ तं प्येव

---

१. Ms. यत्र।

२. Ms. is not clear enough.

३. Ms. चीवरं तारिकाय वापी क्रान्तरिकाये।

४. Ms. वन्दितव्यं।

५. Ms. यत्र शाखाये।

कर्त्तव्यं प्रहाणे चारेन्तेन। यदि भूम्यास्तरो भवति भाजनानि पत्रशाखाहि[1] स्थपितव्यानि। ओम्हाय वा वालिकाय वा भाजने हि वा थपितव्यं। यदि अष्ट-[14. A. P. 5. L. 7.]भाग चतुर्भागं च निषण्णका भवन्ति। एकेन मध्यमवारके स्थितकेन चारेतव्यं[2]। अपरेण प्रणेतव्यं[3]।

अथ दानि पटिपाटिकाये दूरे दूरे[4] प्रहाणस्य उपविष्टा भवन्ति। एकेन चारितव्यं ॥पे॥ लभ्यादानि परिधोवनिकातो मुखं वा धोवितुं हस्तं वा निर्मादयितुं पात्र परिश्रावणं वा धोवितुं। न दानि क्षमति झल्ल-झल्लाये[5] उज्झितुं। मात्राये[6] [14. B. P. 5. L. 1.] उपनामेतव्यं। न दानि क्षमति परिधोवनीयातो स्नापितुं वा चीवरम्वा धोवितुं रञ्जनं वा करितुं[7]। अथ दानि भिक्षू चीवरकर्म करोंति[8]। उदकश्च आविलं भवति भाजनं च अतिरिक्तं ति लभ्यादानि[9] पायित्तकधर्माय याचितुं। आह—आयुष्मन्, देहि भूयो आनीय दास्यामित्ति। किञ्चापि देति अनापत्तिः। तं पि दानि गृह्णिय आनीय कालेन कालं दातव्यं। अथ दा-[14. B. P. 5.-L. 2.]नि आसंनोदको संघारामो भवति। किञ्चापि ततो येव पिवति ततो येव पारिधोवनीयं[10] करोति ततो येव हस्तां धोवति रङ्गम्वा करोति

१. Ms. यत्र शाखाहि।

२. Ms. वारेतव्यं।

३. Probably to mean आनेतव्यं।

४. Ms. दूरेदूर। Should also be दूरदूरे।

५. Ms. सल्लसल्लायि, But the reading occured in many other places.

६. Ms. म त्ताये।

७. Ms. कटितुं।

८. Ms. चीवरकर्म करोति।

९. Ms. लेभ्यादाने।

१०. Ms. परिधोव॰ but, Pali परिभोजनियं।

अनापत्तिः। एवं पानीये प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मा-नतिक्रामति ॥३॥

भगवान् श्रावस्त्याम्विहरति। ते दानि आयुष्मन्तो नन्दनोपनन्दना च[1] षड्वर्गिका च पादधोवनिकायां झल्लझल्ला[2]-[14. B. P. 5. L. 3.]पादां धोवियाणं सर्वं उदकं स्थारिय पादधोवनिकां ओमुद्धिकां करिय आद्रपादकं उपनाहाहि प्रक्षिपिय नैव कर्दमं परिहरन्ति न पांसु। कर्दमं मर्दन्ता पांसु-मर्देन्ता[3] दीर्घं चंक्रमं चंक्रमन्ति। भिक्षू आगच्छन्ति पादा धोवनाय। ते दानि आहंसु—मात्राये यूयमायुष्मन्तो, पादा धोवथ। उदकेपि [खलु मात्रा] [14. B. P. 5. L. 4.] उक्ता भगवता। तथैव सर्वेहि बाहिरकेहि जीवित-परिष्कारेहि। ते दानि भिक्षू पश्यन्ति—तां पादधोवनिकां रिक्ता[4]। ते दानि ओध्यायन्ति। किं दानि अयं पादधोवनिका ओमुद्धिकृता। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह-- शब्दापयथ नन्दनोप-नन्दनां षड्वर्गिकां च। ते दानि शब्दापिता। भगवानाह—सत्यं भिक्षु-[14. B. P. 5. L. 5.]वो नन्दनोपनन्दना षड्वर्गिका च। एवं नाम यूयं पादधोवनिकायां गच्छिय झल्लझल्लाये पादां धोविय उदकं छारिय पादधोवनिकां ओमुद्धिकां करिय आद्रपादां उपानहासु प्रक्षिपिय नैव पांसु परिहरथ न कर्दमं। कर्दमं मर्दन्ता पांसुमर्दन्ता दीर्घकंक्रमं चंक्रमथ। भिक्षू आगच्छन्ति पाद धोवनिकाये। पादा धो-[14. B. P. 5. L. 6.]वनाये यूयं जल्पथ। मात्राये आयुष्मन्तो, पादां धोविथ[5]। उदकेपि खलु भगवता

१. Ms. °नन्दनाय।

२. Ms. is not clear at all here.

३. Ms. मर्दन्ताय सुमेंन्ता।

४. Ms. रक्तां।

५. Ms. धोविय।

मात्रा उक्ता। तथैव सर्वेहि जीवितपरिष्कारेहि। ते दानि भिक्षू पश्यन्ति पादधोवनिकां ओसुद्धिकां कृतां। आहंसु—आम भगवन्। भगवानाह—दुष्कृतां [भिक्षु]वो, (नन्दनो)[१] नन्दनोपनन्दना षड्वर्गिका च। तेन हि एवं पादा धोवितव्या। एवं धोवितपादेहि प्रतिपद्यितव्यं। किन्ति-[14. B P.-5. L. 8.]दानि एवं पादा धोवितव्या? किन्तिदानि धोवितपादेहि प्रतिपद्यितव्यं?

भगवान् दानि भिक्षूनामामन्त्रयति—एवं भिक्षवो, पादां धोवथ यथा शारिपुत्रो स्थविरो।

एकमिदं भिक्षवो, समयं सारिपुत्रो स्थविरो वैशाल्याम्विहरति महावने कूटागारशालायां। स्थविरो दानि कालस्यैव निवासयित्वा पात्रचीवरमादाय वैशाली नगरीं पिण्डाय प्रविष्टो। प्रासा-[14. A. P. 6. L.1.]दिकेन अतिक्रान्तेन प्रतिक्रान्तेन। आलोकितविलोकितेन सम्मिञ्जितप्रसारितेन। संघाटीपात्रचीवरधारणेन अन्तर्गतेहि इन्द्रियेहि अवहिर्गतेन मानसेन स्थितेन धर्मतावस्थप्राप्तेन स्मृतो संप्रजानो मार्गो विय कारित कारणो वैशालीं[२] नगरीं पिण्डाय चरति। स्थविरो दानि अपरेण ब्राह्मणेन दृष्टो। तस्य ब्राह्मणस्य भवति—इमे इति कितिकाय पुत्राः श्रामणकाः ग्रामान्ते ईर्यापथं पश्यन्ति निर्धाविता च भवन्ति। विकोपेन्ति। सो दानि प्रदुष्टचित्तो स्थविरस्य पृष्ठिमेन पृष्ठिमं अनुबद्धो। यत्र येव अयं श्रमणको ईर्यापथं विकोपयिष्यति तत्रैव विहेटकं[३] दास्यामि। स्थविरो दानि ग्रामारण्यसमेन

१. Bracketted word must be on extra rendering by the scribe.

२. Ms. वेशालीं।

३. Ms. शेखटकं। Pali, विहेटकं, according to Sk. विहेठकं or even हेठकं।

ईर्यापथेन समन्वागतो वैशालीं[१] पिण्डाय चरित्वा निर्धावितो विहारं आगतो।

स्थवि-[14. A. P. 3. L. 3.]रो दानि विहारकेस्मिन् पात्रं निक्षिपिय हस्तां प्रक्षालिय संघाटीं प्रस्फोटिय साहरिय अभ्यन्तरेण द्विगुणिकां करिय चीवरवंशे स्थापयित्वा पानीयस्य दकानकं पूरीय पीठिका प्रज्ञापिय पादतद्धकं उपनामयित्वा उपानहाहि कायो[२] उपनामिय उपानहायो छत्रो[३] उपनामिय पादां धोवति। स्थविरो दानि दक्षिणेन हस्तेन उदकं आ-[14. A. P. 6. L. 4.]सिञ्चति। वामेन हस्तेन पादां धोवति। स्थविरेण दानि वामा जंघा धोविता दक्षिणा जंघा [ धोविता ] वामो पादो धोवितो दक्षिणो पादो धोवितो, उपानहापोच्छनकं[४] गृह्णिय उपानहा संपुटं करिय एकस्य उपानहा[५] ऊर्द्धो[६] पोच्छितो[७] द्वितीयस्य उपानहा ऊर्द्धो[८] पोच्छितो एकस्य उपानहा तलं पोच्छितं द्वितीयस्य उपानहा [14. A. P. 6. L. 5.] तलं पोच्छितं। उपानहिकायो निक्षिपिय दकानकातो वामाये कलाचीये उदकं आवर्जयित्वा दक्षिणेन हस्तेन उपानहा पोच्छनकं धोविय निष्पीडित्वा आतपे शोषपितं[९]। कलाचीये[१०] उदकं आवर्जिय हस्ता धोता। हस्तां

१. Ms. वैशाली।
२. Ms. उपानहि।ॢकायो
३. Ms. छत्रो।
४. Ms. उपानहायो छनन।
५. Ms. उपानहो।
६. Ms. वद्धो।
७. Ms. यो छितो।
८. Ms. वद्धो।
९. Ms. शेषयेतं।
१०. Ms. फलयीय।

धोविय दकानकं धोविय पानीयावशेषं छोरिय आतपे शोषितं ।

सो दानि ब्राह्मणो तस्य [14. A. P. 6. L. 6.] आचारगोचरं पश्यिय तुष्टो । सो दानि प्रसन्नचित्तो आह— यथापि इमं भवता शारिपुत्रेण दकानकं उपचीर्णं यो पि सो ब्राह्मणानां उष्णोदक करको सोपि न एवं । शुची लभ्या खलु इतो पानीयं पातुं । स्थविरेण दानि तस्य ब्राह्मणस्य प्रसन्नचित्तस्य चत्वारार्यसत्यानि[१] प्रदर्शितानि । दुःखमार्यसत्यं [ दुःख समुदयमार्यसत्यं ] दुःखनि-[14. A. P. 6. L. 7.]रोधमार्यसत्यं दुःखनिरोधगामिनीप्रतिपदमार्यसत्यं । तेन दानि ब्राह्मणेन तत्रैव स्थाने स्थितेन श्रोतापत्तिफलं साक्षात्कृतं ।

भिक्षू दानि भगवन्तमाहंसु—यस्य भगवान् , अथ मयं ब्राह्मण-स्थविरस्याचारगोचरेण तुष्टो । भगवानाह— न एतर्हिं एवमन्यदापि एषो एतस्य आचारगोचरेण तुष्टोन्यदापि ।

भगवानन्यदापि [14. B. P. 6. L. 1.] भिक्षवो । भूतपूर्वम्भिक्षवो, अतीतमध्वानं एतर्हिं च नगरं वाराणसी काशि जनपदो[२] । तत्र दानि अग्र-कुलिको आढ्यो[३] महाधनो महाभोगो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूत-जातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वअजगवेडको[४] प्रभूतदासीदास-

---

१. Ms. चत्वार्यार्यसत्यानि ।

२. But the topic in question is being described at Srāvasti.

३. Ms. आद्यो ।

४. Ms. अजगविडको ।

कर्मकरपौरुषेयो। तस्य दानि एको पुत्रो अचिरजातो[१] । सो [14.B. P.6.-L. 2.] दानि मातापितृभिरुन्नीयति वर्धीयति । यं कालं सप्तवर्षोष्टवर्षो वा सो दानि मातापितृणां पूर्वोत्थायी पश्चान्निपाती प्रियवादी मनापवादी[२] । किंकरपरिश्रावको[३] । तस्य दानि श्रेष्ठिकस्य कुलपुत्रका गृहं ओचरन्ति । तस्य गृहं गुप्तश्च[४] सुरक्षितश्च न पारेन्ति ओतारं विन्दनाय । कदाचि दानि सो श्रेष्ठि अपरेहि ज्ञाति सालो[हितेहि] निमन्त्रितको गतो व-[14. B. P. 6.-L. 3.]र्षा रात्रिकं । तं दारकं[५] रक्षपालं थपियाणं । गुप्तद्वारं[६] घट्टियाणं रक्षमाणो आसेसि । सो दानि दारको श्रेष्ठिना सपरिवारेण गतेन गृहस्य द्वारं घट्टियाणं रक्षमाणो आसति । तेहि दानि कुलपुत्रकेहि ओतरो लब्धो । ते दानि तं गृहं ओक्यन्दियाणं[७] प्रविष्टा । ते दानि उल्कायो च दीपिकायो च प्रज्वालियाणं मार्गन्ति। सो एको दा-[14. B. P. 6. L 4.]रको दृष्टो । ते दानि पृच्छन्ति—दारक, कहिं तुम्हाणं हिरण्यं वा सुवर्णं वा ? सोदानाह—अहं पि न जानामि । एतं गृहं[८] शून्यकं मार्गिय मार्गिय यं लभथ तं गृह्णथ । तेहि दानि मार्गिय मार्गिय प्रभूतं[९] हिरण्यसुवर्णं गृहस्य मध्यमागारे महान्तं कूटिकृतं । यो तेषां चोरसेनापतिः सो गृहस्य

---

१. Ms. अचिरजातो ।

२. Ms. मन अपवादी । Pali, मनापचारी ।

३. Should परिश्रावी । Pali, °पटिस्सावी ।

४. Ms. प्रश्च ।

५. Ms. दारं ।

६. Ms. पुत्रद्वारं ।

७. In many places also ओक्रन्दि० ।

८. Ms. गृहं ।

९. Ms. प्रभूतं ।

मध्यागारे उपविष्टः। सो दानि[1] चो-[14. B. P. 6. L. 5.]रसेनापतिः पिपासितः। तस्य दारकस्याह हं घो[2] दारक, पिपासितोस्मि इच्छामि पानीयं पातुं। सो दानि दारको चौक्ष समुदाचारो भाजनं गृह्णिय परिमार्जिय हस्तां सुधोतां[3] कृत्वा भाजनं सुधोतं कृत्वा उदकस्य पूरिय यत्र दीपा दीप्यन्ते तत्र अल्लीनो। सो दानि सुप्रत्यवेक्षितं करिय चोरसेनापतिस्य अल्लीनो सेना-[14. B. P. 6. L. 6.]पति पिवाहित्ति। तेनापि दानि चोर-सेनापतिना तस्य दारकस्य पानीयं देन्तस्य सर्वमुपलक्षितं। सो दानि पृच्छति—हं घो दारक, कस्य कृतेन त्वं अत्र दीपमूलं अल्लीनोसि? सो दानि आह— सेनापति, पानीयं प्रत्यवेक्षितुं। मा अत्र पानीयस्मिं तृणो वा भवे प्राणको वा। तेन सेनापतिस्य अफासु भवेय। सो दानि सेनापति तस्य आचारगोचरेण तुष्टो। [14. B. P. 6. L. 7.] तस्य भवति सेनापतिस्य— मातात्र अस्माकं तात्र एषो वधकानां प्रत्यर्थिकानां प्रत्यमित्राणां अर्थकामो हितकामो [को] पुनर्वादो यो एतस्य मातापिता वा ज्ञातिका वा। तेहि एषो कथं अमैत्रचित्तो भविष्यति। यदि वयमिमस्य दारकस्य एवं धर्मिष्ठस्य इमं हिरण्यसुवर्णं हराम प्रतिचोरेहि पि मुष्येम ग्रहणं पि गच्छेम राजकुलेपि वध्येम।

सो दानि [14. A. P. 7. L 1.] चोरसेनापति पानीयं पिविय तां सर्वां चोरां शब्दापिय पृच्छति—भो[4] भणे, को अहं युष्माकं। ते दानि आहंसु— सेनापति। आह— भवन्तो, अहं इमस्य दारकस्य एवं च एवं च आचारगोचरेण तुष्टो। यदि वयं एतस्य धर्मिष्ठस्य एतं हिरण्यं

१. Ms. दान।
२. Pali, हम्भो।
३. Ms. सुधा तां।
४. Ms. को।

सुवर्णं हरेम प्रतिचोरेहि वा वयं मुष्येम ग्रहणं पि गच्छेम राजकुलेपि वध्येम। यदि युष्माकं अनुकूलं [14. A. P. 7. L. 2.] भवे मुञ्चेम वयं एतस्य हिरण्यसुवर्णं। अन्ये वयं चोरयिष्यामः। ते दानि आहंसु—यथा सेनापतिकस्य रुच्यते। सो दानि दारकस्याह—हं घो दारक[1], इमं वयं तव सर्वं हिरण्यं सुवर्णं देमि। ते दानि चोरा निर्धात्रिताः[2]। तेन दारकेन द्वाराणि सर्वाणि घट्टितानि[3]। देवता गाथां भाषते—

"आचारगुण सम्पन्नाः ये भवन्ति च मानवाः। [14. A.P.7. L.3.]
लभन्ति विपुलां अर्थां यथा पानीयदायकः॥

आचारं शिक्षितं श्रेयो अनाचारं न शिक्षितं।
चोरेहि गृहीतो सन्तो मुक्तो आचार कारणात्॥

धात्या भवन्त्यधात्याचारं शिक्षियाणं विनयं च।
स्थानेषु च ऐश्वर्यं लभन्ति आचार गुणयुक्ताः॥

वध्या भवन्त्यवध्याचारं[4] शिक्षायाणं विनयं च।
वस्मान्नरेण सततं आचारगुणेन भवि-[14.A.P.7. L.4.]तव्यं॥

रौद्रा लोहितपाणी चौरा तुष्यन्ति तादृशा सन्ता।
आचारेण अनार्या आर्या जातावक्रान्ताः॥"

---

१. Ms. दारका।
२. Ms. निर्धापिता।
३. Ms. घट्टितानि।
४. Ms. भवन्त्यवध्या आचारं।

भगवानेतस्मिन् वस्तुनि धर्मपदं भासते—

"न ब्राह्मणस्य प्रहरेय नास्य मुंचेय ब्राह्मणो।
धिग्ब्राह्मणस्य हन्तारं तं पि धिक् योस्य मुंचति—"[१]

भगवानाह— स्याद्वो भिक्षवो, एवमस्मादन्योसौ तेन कालेन तेन समयेन [ सारिपुत्रो तस्य ][२] [14. A. P. 7. L. 5.] भवति अग्रकूलिकस्य[३] पुत्रो नैतदेवं द्रष्टव्यं।

एषो शारिपुत्रो स्थविरो। अन्यो सो चोरसेनापति। एषो ब्राह्मणो तदपि एतस्य एषो आचारगोचरेण तुष्टो। एतर्हिंपि एषो स्थविरस्य आचारगोचरेण तुष्टो।

एषो दानि भिक्षू यदा ग्रामातो निर्गतो भवति ततो ग्रामप्रवेशिकं चीवरं प्रस्फोटित्वा अत्यन्त परि-[14. A. P. 7. L. 6.]कर्ममाहरित्वा स्थपेतव्यं। आरामचरणकं प्रावरित्वा आसनं प्रज्ञपेतव्यं। पादोपधावनकं उदकदानं[४] पि च उष्ठपयित्वा चेलखण्डेन रजो प्रस्फोटयितव्यो। दकानकं कलाचीयं आवर्जेत्वा[५] चोलकं धोवित्वा निष्पिडित्वा उपानहा निर्मादयितव्या ॥पे॥ याव चोलकं निष्पिडित्वा थपेतव्यो। मा प्राणका जायेंसु[६]

---

१. Pali Dhammapada. 26/7—

न ब्राह्मणस्स प्रहरेय नास्य मुञ्चेय ब्राह्मणो।
धि ब्राह्मणस्स हन्तारं ततो धि यस्य मुञ्चति॥

२. Ms. is not clear.

३. Ms. अग्रकूले कस्य।

४. Probably उदकाधानं as in Pali.

५. Ms. अवर्जेत्वा।

६. Ms. जायेंसु।

नीलकाय[1] वा भवेंसु[2] । भिक्षुणापि ताव [14. A. P. 7. L. 7.] दक्षिण-हस्तेन उदकं आसिंचितव्यं । वामेन हस्तेन पादां धोवितव्या । वामा ताव जंघा धोवितव्या । दक्षिणा ताव जंघा धोवितव्या । वामो पादो धोवयितव्यो । दक्षिणो पादो धोवयितव्यो । उपानहायो प्रस्फोटित्वा संपुटीकृत्वा एकस्योपानहाये ऊर्द्धो[3] पोच्छितव्यो । अपरस्य च ऊर्द्धो[4] पोच्छितव्यो । एकस्य उपानहाये तलं [14. B. P. 7. L. 1.] पोच्छितव्यं । द्वितीयस्य उपानहाये तलं पोच्छितव्यं । कुण्डिकातो वा करकतो वा कलचीये वा उदकं आवर्जिय उपानहापोच्छनकं धोवितव्यं । पीडिय आतपे शोपयितव्यं कलाचीये उदकं आवर्जिय हस्तौ धोवितव्या । न क्षमति उपानहाहि आर्द्रपादेन प्रवेशयितुं । अथ खलु यं कालं अध्माता भवन्ति ततो प्रवेशयितव्यो । अय खलु दानि [14. B. P. 7. L. 2.] सर्वसंघस्य पादधोवनिका भवति । न क्षमति भिक्षुणा झल्लझल्लाये पादां धोवितुं उदकं छोरिय[5] ओमुद्धिकं[6] पादधोवनिकां कर्तुं । अथ खलु अच्छटिकां करेन्तेन पादधोवनिकायां प्रविशितव्यं । यदि ताव कोचि भिक्षुः पूर्वप्रविष्टो भवति आगमितव्यं । यात्र तेहि धोविता पादान्ति । अथ दानि खल्वेका पादधोवनिका भवति । त्रीणि वाचायो जल्पित-[14. B. P. 7. L. 3.]व्यो । यो को वृद्धतरको वृद्धोन्ति[7] । यदि ताव कोचि वृद्धतरको भवति अन्तरं दातव्यं । यं कालं तेन पादा धोविता भवति उपविशितव्यं । अथ दानि कोचि वृद्धतरको न भवति । एवं पि उपविशितव्यं ततो यदि ताव दक्षिणान्ते पादधोवनिका

---

१. Ms. नीलिकाय ।
२. Ms. यवेंसु ।
३. & ४. Ms. वद्धो ।
५. Ms. छोरयि ।
६. Ms. ओमुद्रिकां ।
७. This sentence does not give any clear meaning.

भवन्ति दक्षिणेन हस्तेन[१] उदकं आसिञ्चितव्यं। वामेन हस्तेन पादा धोवितव्या। [ 14. B. P. 7. L. 4. ] वामा ताव जंघा धोवितव्या। दक्षिणा[२] जंघा धोवितव्या। वामो पादो धोवितव्यो। दक्षिणो पादो धोवितव्यो। अथ दानि वामन्ते पादधोवनिका भवति वामेन हस्तेन उदकं आसिञ्चितव्यं। दक्षिणेन हस्तेन पादा धोवितव्या। नापि दानि क्षमति तेनैव हस्तेन उदकं आसिञ्चितुं। अथ दानि द्वे जना भवन्ति एकेन आ-[ 14. B. P. 7. L. 5. ]सिञ्चितव्यं एकेन धोवितव्यं। दक्षिणा ताव जंघा धोवितव्या। वामा जंघा धोवितव्या दक्षिणो पादो धोवितव्यो। वामो पादो धोवितव्यो। उपानहायो संघाटी[२A] करिय एकस्य उपानहाये ऊद्ध्वों[३] पोच्छितव्यो। द्वितीयस्य ऊद्ध्वों[४] पोच्छितव्यो। एकस्य उपानहाये तलं पोच्छितव्यं। द्वितीयस्य उपानहाये तलं पोच्छितव्यं। [14. B. P. 7. L. 6.] यदि तर्हि कोचि भिक्षु भवति नवतरको सो वक्तव्यो—उदकं आसिञ्चाहित्ति[५]। उपानहा पोच्छनको[६] धोविय पीडिय तत्रैव[७] स्थपितव्यं। हस्तान्निर्मादियाणं अथ[८] तायां उपानहायां प्रक्षिपितव्यं ? नापि क्षमति पादधोवनिकायां ओगुण्ठित शीर्षेण ओहितहस्तेन वा ( पाद धोवनिकाया )[९] उपविशितुं। अथ खलु एकांसी-

१. Ms. अन्तेन।
२. Ms. दक्षिणेन।
२A. Probably it is संघट्टि।
३. Ms. वध्वो।
४. Ms. वध्रको।
५. Ms. आसिञ्चिहिन्ति।
६. Ms. उपानहायो छन्नो।
७. Ms. तत्रेव।
८. Ms. अथा।
९. The bracketted word obviously is an extra one.

कृतेन उपविशितव्यं। नापि दानि [14.B. P. L. 7.] क्षमति पादधोव-निकायां उद्देशप्रयुक्तेन वामनसिकारप्रयुक्तेन वा सिद्धान्तरगतेन[1] वा निरोध समापत्तिं [ वा ] चिन्तन्तेन आसितुं। अथ खलु पादेहि धोवितेहि उत्थिय गन्तव्यं धूलीपरिवर्जन्तेन गन्तव्यं। नापि दानि क्षमति पादेहि धोवितेहि दीर्घचंक्रमं चंक्रमितुं। अथ दानि भिक्षुः स्वाध्यायं करोति पादेहि धोवि-तेहि चंक्रमन्ति भूयो धो-[ 14 A. P. 8. L. 1]वितव्या। अथ दानि हेमन्तकालो भवति भिक्षुः पश्यति को भूयो धोविष्यति इति अन्तमसतो लेङ्कटखण्डेन वामहस्तेन वा आमजित प्रविशितव्यं। एवं पादा धोवि-तव्या। एवं धोवितपादेहि प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारि-कन्धर्मानतिक्रामति ॥३॥

भगवान् राजगृहे विहरति विस्तरेण निदानं कृत्वा जीवको कौमर-भृत्यो भ-[14. A. P. 8. L. 2.]गवन्तं याचति—अनुजानातु भगवान्, श्रावकानां जेन्ताकं वातपित्तश्लेष्मकानां फासु[2] भविष्यति। भगवानाह—तेन हि अनुजानामि। एषा एवार्थोत्पत्तिः ॥३॥

भगवान् श्रावस्त्याम्विहरति। संघस्य दानि जेन्ताको। ते दानि आयुष्मन्तो षड्वर्गिकाः प्रतिकृत्येव गच्छिय जेन्ताकं प्रज्वालिय द्वारं घट्टिय स्वेदन्ता आसन्ति। आगता भिक्षू द्वारं याचन्ति[3]—[14.A.P.8.L.3.] आयुष्मन्तो, देथ दारं। ते दानि आहंसु—आगमन्तु आयुष्मन्तो, न ताव

---

१. Ms. सिद्धा॰।

२. Ms. पयसु, cf. 14A. P8. L6.; In Pali also the term 'फासु' is used.

३. Ms. यावन्ति।

जेन्ताको तप्तो[1] भवति। यं कालं भिक्षू सन्निपतिताः तं कालं सर्वं तैलं उपयोजिय सर्वं चूर्णं उपयोजिय सर्वं उदकं छोरिय सर्वं काष्ठं अग्नौ प्रक्षिपिय जेन्ताकं अपदूरिय निर्धाविताः। आहंसुः—प्रविशन्तु आयुष्मन्तो, जेन्ताको तप्तो[2]। [14. A. P. 8. L. 4.] ते दानि भिक्षू शीतप्रष्टव्येन[3] स्पृष्टाः त्वरितत्वरितं प्रविष्टा। ते दानि यं कालं तेहि आयुष्मन्तेहि षड्वर्गिकेहि द्वारं आघट्टिय बाहिरवितण्डितं कृतं। ते दानि तैलं मार्गन्ति न लभन्ति। चूर्णं मार्गन्ति न लभन्ति। उष्णेन च धूमेन संतापिताः उदकं न लभन्ति। ते दानि आगच्छन्ति। याव बाहिर वितण्डितं कृतं। ते दानि आहंसुः—[14. A. P. 8. L. 5.] आयुष्मन्, षड्वर्गिकाः ओसरथ द्वारं। धूमेन च उष्णेन च मराम[4]। ते दानि हसन्ति च विलेचन्ति च। ते दानि आहंसुः—स्वेदन्तु आयुष्मन्तो! उत्पात[5] गण्डपिटकानां वातपित्तश्लेष्मिकानां फासु भविष्यति। ते दानि यं कालं धूमेन च उष्णेन च सुष्ठु संतापिताः। तं वेलं जेन्ताकस्य द्वारं मुक्तं। ते दानि उष्णेन च सन्तापिताः बाह्यतो पि[6] [14. A. P. 8. L. 6] उदकं मार्गन्ति न लभन्ति। ते दानि आहंसु—स्तोकस्तोकं आयुष्मन्, मात्राये उपनेथ। उदकेपि मात्रज्ञता उक्ता भगवता। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसुः। भगवानाह— शब्दापयथ षड्वर्गिकां। ते दानि शब्दापिताः। भगवानाह— सत्यं भिक्षवो, षड्वर्गिकाः एवन्नाम संघस्य जेन्ताकोति[7] तदेव सर्वं भगवान्नि-

१. Ms. तत्तो।
२. Ms. तत्तो।
३. Ms. भिक्षुणी त प्रष्टव्येन।
४. Ms. सराम।
५. Probably it is उत्थित।
६. Ms. ये।
७. Ms. इ।

स्तरेण प्रत्यारो-[14. A. P. 8. L. 7.]चयति । यात्र एते दानि भिक्षू उष्णेन च धूमेन सन्तापिता निर्धाविता बाह्यतोपि उदकं मार्गयन्ति न लभन्ति । यूयं दानि आहंसु—स्तोकस्तोकं आयुष्मन् , मात्राये उपनेथ । उदके पि मात्रज्ञता उक्ता भगवता । आहंसु—आम भगवन् । भगवानाह—दुष्कृतं वो भिक्षवो, षड्वर्गिकाः । अनेकपर्यायेण मैत्रं कार्यकर्म[1] वदामि [14. B. P. 8. L. 1] सब्रह्मचारिषु ध्रुवं प्रत्युपस्थापयितव्यं आवि चैव रहो च । मैत्रं वाचा कर्म मैत्रं[2] मनो कर्म सब्रह्मचारिषु ध्रुवं प्रत्युपस्थापयितव्यं आवि चैव रहो च । तत्र नाम यूयं इदमेवंरूपं पापकर्ममकुशलन्धर्ममध्यचरिष्यथ ? तेन हि एवं स्नाने प्रतिपद्यितव्यं । एवं जेन्ताके प्रतिपद्यितव्यं । किन्ति दानि एवं स्नाने प्रतिपद्यितव्यं एवं [14. B. P. 8. L. 2.] जेन्ताके प्रतिपद्यितव्यं ?

जेन्ताकं करेन्तेन वट्टितो वा कर्त्तव्यो चतुरस्रो वा । विदिशं द्वारं कर्त्तव्यं । वातपानीयं वीथि कर्त्तव्या । अभ्यन्तरे[3] विशाला बाहिरतो संक्षिप्ता[4] । एकाये वातपानीये[5] वीथिये द्वौविका भवति द्वितीया कर्त्तव्या भूमि अस्तरितव्या उपलेहि वा पट्टिकाय[6] वा सुधामृत्तिकालेपो वा कर्त्तव्यो । उद्विद्ध वीथि कर्त्तव्या । भस्त्रिका[7] [14. B. P. 8. L. 3.]

---

१. Ms. मैवं कायकर्म ।
२. Ms. मैवं ।
३. Ms. अत्यन्तरे ।
४. Ms. संघिता ।
५. Ms. वातध ।
६. Ms. वट्टिट्टिकाय ।
७. Ms. तस्त्रिका । cf. The next line.

तव्यं। गण्डी आकोटेतव्या। अग्निर्दातव्यो। उदकं आहर्त्तव्यं। न दानि अग्निं दत्वा पश्चाद्गण्डी आकोटेतव्यो अग्निर्दातव्यो। [14. B. P. 8. L.6.] उदकं आहर्त्तव्यं।

[न दानि अग्निं दत्वा पश्चाद्गण्डी आकोटेतव्या* ।]

अथ खलु गण्डी आकोटेत्वा अग्निर्दातव्यो। मा एवमेव काष्ठं दह्येय[1] जेन्ताकस्य गण्डी आंकोटितापि[2] जानितव्या किं एपो जेन्ताको सर्व-सांघिको[3] पारिवेणिको[4] पर्याये[5]। यदि ताव पर्याये[6] भवति ये तर्हि पर्याये तेहि[7] गन्तव्यं। अथ दानि पारिवेणिको[8] भवति ये तस्मिं पारि-वेणिका[8] संति तेहि ग-[14. B. P. 8. L. 7.]न्तव्यं। अथ दानि सर्व-सांघिको भवति तथा एवं स्नायन्तेन चीवरकं साहरित्वा[9] एकस्थाने स्थापे-तव्यं[10]। लोठिकेन[11] वा पटिकाय या चीवरवंशे वा थपेतव्यो। जेन्ताकपीठे वा प्रविशंतेन न दानि चमति वाहा भ्रामयन्तेन प्रविशितुं। अथ खलु एकेन हस्तेन अग्रतो प्रतिच्छादित्वा प्रवेष्टव्यं। एको निष्कामति एको प्रविशति। यो प्रविशति तेनान्तरं दात-[15. A. P. 1. L. 1.]व्यं। न दानि आस-

---

* Bracketted line is obviously a repetition.
१. Ms. दह्येय।
२. Ms. आकोटिता जे।
३. Ms. सर्ववाधिको।
४. Ms. पारिवेशिको।
५. Ms. यथा यो।
६. Ms. पर्यायि।
७. Ms. तर्हि।
८. Ms. परिवेशि०।
९. Ms. मार्हारत्वा।
१०. Ms. स्थवितव्य।
११. Ms. लोटिकेन। cf. P. 176 [15A. P. 3. L. 2]

नानि वा भाजनानि वा वृद्धतरकं वा भिक्षुं लंघयन्तेन गन्तव्यं । संप्रजाननेन गन्तव्यं । यदि दानि उपाध्यायो वा आचार्यो वा प्रविष्टको भवति न दानि बाहिरतो विक्रोशितव्यं—स्नायामि आचार्य, स्नायामि उपाध्यायत्ति[१] । अथ खलु चीवरकानि स्थापित्वा प्रविशित्वा तस्य ताव परिकर्म कर्त्तव्यं । अथ दानि अन्यस्यापि कर्त्तुकामो भवति आपृच्छित्वा कर्त्त-[15. A. P. 1. L. 2.]व्यं । अथ दानि सो प्रकृत्येव[३] भणितो भवति अमुकस्य वा अमुकस्य वा परिकर्म कुर्येसित्ति । किञ्चापि अनापृच्छित्वा करेति । अनापत्तिः। यदि ताव अग्नि वहलको भवति नवकेहि अग्रतो स्थातव्यं अग्निप्रतिवाहेन्तेहि । अथ दानि अग्निर्मन्दो भवति वृद्धेहि अग्रतो स्थातव्यं । परिकर्मं[४] करेन्तेहि न दानि स्वेदेन वा मालेन वा उप्फोषेतव्यो । उपान्तके-[15. A. P. 1. L. 3.]न स्नानेन वा प्रतिपन्नेन वा परिकर्म कर्त्तव्यं । अन्तेवासिकेहि वा सार्द्धेविहारिकेहि[५] वा परिकर्म करेन्तेन न दानि अपूर्वचरिमं उभयवाहा प्रसारेतव्या । अथ खलु [एकेन] हस्तेन अग्रतो प्रतिच्छादयितव्यं अपरेण परिकर्मं[६] कारयितव्यं । अथ दानि भिक्षुः प्रहाणिको भवति न दानि क्षमति तेहि अग्निं आजुहित्वा[७] उदकं प्रविशियित्वा [15. A. P. 1. L. 4.] उदकतमं बन्धित्वा द्वारं पिहित्वा शालं बन्धित्वा प्रहाणं आसितुं प्रस्वेदन्तेहि । न दानि क्षमति तैलेन शोषयितुं । अथ खलु मिनीय दातव्यं । चपकेन वा करण्डिकाय वा हस्तसंज्ञाय वा भाजनकेन वा

१. Ms. विक्कोतव्यं, Pali—पक्कोसितब्बं ।
२. Ms. उपाद्यान्ति ।
३. In some places it is प्रतिकृत्येव ।
४. Ms. परिकर्म ।
५. Ms. सर्वे° ।
६. Ms. परिकर्म ।
७. Ms. अग्नि प्रशहित्वा । प्रज° ?

दातव्यं। नापि दानि क्षमति चूर्णं राशीय[१] उपनेतुं। सिनीय दातव्यं मानभण्डे वा भाजनेन वा हस्तसंज्ञाय वा पिण्डि-[15. 1. P. 1. L. 5.]कम्वा पट्टिय दातव्यं। अथ दानि दानपती आहंसु—यावदर्थं भदन्ता, उपनेन्तु[२]। एवं पि कृत्वा मात्राये उपनेतव्यं। जेन्ताकं प्रविशन्तेन उदकस्य प्रत्ययो जानितव्यो कथं दीयति। यदि ताव सितकं[३] दीयति उष्णोदकं घटेन वा कुण्डेन वा तेन तथा येव ग्रहेतव्यं। अथ दानि प्रकृत्येव आहंसु—यो[४] प्रतिबलो [15. A. P. 1. L. 6.] भवति उदकं उपस्थापेतुं सो प्रविशतु[५]। यो प्रतिबलो भवति उदकं उपस्थापेतुं तेन प्रवेष्टव्यं। अथ दानि अन्तेवासिको [वा] सार्द्धंविहारिको[६] वा आहंसु उपाध्यायाचार्या, प्रविशथ। वयमुदकमुपस्थापयिष्यामित्ति प्रवेष्टव्यं। एवं पि कृत्वा मात्राये उपनेतव्यं। उपासका वा कर्मकरा [वा] आरामिका वा आहंसुः—प्रविशन्तु आर्यमि-[15. A. P. 1. L. 7.]श्राः, वयं उदकं दास्यामः। प्रवेष्टव्यं। मात्राये उपनेतव्यं। अथ दानि ओघो वा पुष्किरिणी वा तडागो वा भवति किञ्चापि यावदर्थं उपनेन्ति अनापत्तिः। न क्षमति अभ्यवकाशे नग्नस्य नग्नेन परिकर्म कर्त्तुं। अथ दानि उदकस्य प्रतिच्छन्नं भवति नाभिमात्रं वा उदकं। अनापत्तिः। अथ दानि जानुमात्रं उदकं भवति उपविष्टेन [15. B P. 1.-L. 1.] कर्त्तव्यं यथा नाभिप्रतिच्छन्ना[७] भवेय। न क्षमति आत्मनो

---

१. Ms. राशिय।

२. Ms. उपनेतुं।

३. Ms. मेतकं।

४. Ms. या।

५. Ms. प्रवेशतु।

६. Ms. सार्धं।

७. Ms. नातिप्रति।

चीवराणि गृह्णित्वा परस्य चीवरेहि समाकुली कृत्वा स्थापेतुं। अथ खलु यथा-स्थाने स्थापयित्वा गन्तव्यं। एतं दानि जेन्ताकस्य आरोचितं भवति जानितव्यं[1]—किमयं जेन्ताको एकतो सांघिको पर्याये[2] पारिवेणिको[3] निमन्त्रितकानां ति। यथा भवति तथा गन्तव्यं। यदि तात्र एकतो सांघिको भवति [15. B. P. 1. L. 2.] सर्वसंघेन गन्तव्यं। अथ दानि पर्याये भवति तेहि गन्तव्यं। पारिवेणिको[4] भवति पारिवेणिकेन[4] गन्तव्यं। निमन्त्रितकानां भवति निमन्त्रितकेहि गन्तव्यं। अथ दानि आरोचीयति—भन्ते, यस्यास्ति तैलं च चूर्णं च ततो आगच्छन्तुत्ति। ततो यस्यास्ति तैलं च चूर्णं च तेहि गन्तव्यं। अथ दानि भिक्षू जरादुर्बला वा व्याधि-दुर्बला वा भवन्ति ये नेसं[5] [15. B. P. 1. L. 3.] सर्धेविहारिका[6] भवन्ति अन्तेवासिका वा तेहि वक्तव्यं—उपाध्यायाचार्या, आगच्छहि स्नाहि[7] वयं तैलं वास्याम। यदि स्नायितुकामो भवति गन्तव्यं। अथ दानि न स्नायितुकामो भवति वक्तव्यं—सुगोत्रागता,[8] गच्छथ यूयं नाहं स्नापयिष्यामि। अथ दानि जेन्ताको सांघिको भवति दायकदानपती वा देन्ति गण्डी आहनि-[15 B. P. 1. L. 4.]तव्या आरोचयितव्यं—आयुष्मन्, तैलं भविष्यति। चूर्णं भविष्यति। उदकं भविष्यति। स्नायंतु[9] आयुष्मन्तो।

१. Ms. जानेतव्यं।

२. Ms. पर्वायं।

३. Ms. पारिवेशिको।

४. Ms. पारिवेशि°।

५. Ms. जेतस्य।

६. Ms. सर्वे विहारिका।

७. Ms. त्राहि।

८. Ms. सुगोत्री माता। Perhaps equal to Pali, कुलपुत्ता।

९. Ms. नायंतु, Pali नहायन्तु।

जेन्ताकवारिका अध्येपितव्याः। तेहि जेन्ताको प्रज्वालितव्यो[१]। जेन्ताक-पीठकानि प्रवेशयितव्यानि। तैलम्प्रवेशयितव्यं। चूएर्णं प्रवेशयितव्यं। शुक्तियो प्रवेशयितव्यो। उदकं तापयितव्यं। यदि ताव अन्यं [15. B. P. 1-L. 5.] तैलं चूर्णं भवति मितकं[२] दातव्यं। तैलं संचयितव्यं। उदकं भावयितव्यं। अथ दानि बहुं भवति संघसंव्यवहारको वादां नयति वा जल्पति विश्वस्ता भदन्ता स्नायन्तुत्ति। एवं पि करिय तैलमात्रा जानितव्या। नवकेहि भिक्षूहि स्थविराणां भिक्षूणां कायपरिचर्या कर्त्तव्या। नापि दानि क्षमति नवकेहि भिक्षूहि उच्चहन्तेहि स्ना-[15. B. P. 1. L. 6.]यितुं। अन्योन्यस्य सगौरवेहि स्नायितव्यं सप्रतिशेहि स्नायितव्यं। नापि क्षमति उच्चशब्दमहाशब्देहि स्नायितुं। अथ खलु अल्पशब्देहि अल्पनिर्घोषेहि जेन्ताके स्नायितव्यं। अथ दानि प्रश्नो स्थापीयति। किञ्चापि प्रघृष्टेन स्वरेण प्रश्ना विसर्जेन्ति। अनापत्तिः। यं कालं भिक्षू स्नाता भवन्ति जेन्ताकवारिकेन तैलं शेषं भवति प्रवेशयित-[15. B. P. 1. L. 7.]व्यः। चूर्णं शेषं भवति प्रवेशयितव्यं। जेन्ताकपीठकानि धोविय प्रवेशयितव्यानि। शुक्तियो धोविय प्रवेशयितव्यायो। यं काष्ठं शेषं भवति यथास्थाने स्थापे-तव्यं। अथ दानि कोचि पश्चात्प्रविशति[३]। गच्छन्तु[४] आयुष्मन्तो, वयमेतं प्रवेशयिष्यामत्ति गन्तव्यं। तेहि प्रवेशयितव्यं। मा आदीनवमुत्पादये। जेन्ताकं सिञ्चिय सम्मार्जिय वांगरा[५]-[15. A. P. 2. L. 1.]नि चापिय जेन्ताकं बाहिरघटितं करिय गन्तव्यं। एवं जेन्ताके प्रतिपद्यितव्यं। एवं

१. Ms. प्रज्वलितव्या।

२. Ms. खितकं।

३. Ms. पश्चात्प्रविशति।

४. Ms. आगच्छन्तु।

५. Ms. सन्माजितव्यं वा, The Ms. not at all clear.

स्नाने प्रतिपद्यितव्यं । न प्रतिपद्यति अभिसमाचारिकान्धर्माnति-क्रामति ॥३॥

भगवान् श्रावस्त्यामि्वहरति । पश्चार्थवशां[१] विस्तरेण निदानं कृत्वा याव अद्राक्षीद्भगवां पश्चाहिकां विहारचारिकामनुचंक्रमन्तो अनुवि-चरन्तो विहारकेहि भाण्डं उज्भितप्रकीर्णं[२] [15. A. P. 2. L. 2.]तिष्ठति । स्थालीयो पीठरिका उधोतका अनुपलिप्ता नकुलमुसिकेहि आलप्यमाना ओदन-मानिकायो ध्वस्ता काकशकुन्तेहि[३] निक्योडियन्ता द्रोणीयो बद्धायो परियो भक्तपीठिका[४] माणिकं चंगेरियो शुष्कायो[५] पटलका[६] ।

भगवां जानन्तो येव पृच्छति—किमयं भिक्षवो, भाण्डं[७] उज्भित-प्रकीर्णं तिष्ठति ? तेन हि एवं भाण्डे[८] प्रतिपद्यितव्यं । [15. A. P. 2. L. 3.] किन्तिदानि एवं भाण्डे[८] प्रतिपद्यितव्यं ?

एतं दानि संघस्य अनुग्रहो भवति नित्यपवना वा उद्दिशितव्या । मासवारिको वा दशाहवारिको वा तत्र उद्दिशितव्यो पंचाहवारिको[९] वा । तेन संघस्य अनुग्रहो साधयितव्यो । भिक्षुसंघो परिवेशापयितव्यो । यं कालं भिक्षुसंघेन भुक्तं भवति यं तत्र भाण्डं भवति लो-[15. A. P. 2. L. 4.]हिका

---

१. Ms. उज्भितावकीर्णं । cf. The next line.
२. Ms. पश्चार्णावशां ।
३. Ms. ह्स्ता काकणकुन्तकोह ।
४. Ms. °पठक ।
५. Ms. शुप्पायो ।
६. Ms. पथलका ।
७. Ms. भएडं ।
८. Ms. भएडे ।
९. Ms. यं चाह° ।

वा कटाहका वा स्थाली वा पीठरिका वा मासवारिकेहि [वा पत्तवारिकेहि वा] कल्पियकारं शब्दापिय[१] लिप्तोपलिप्तं करिय ओमुद्धिका स्थपितव्या सूर्याभिमुखं[२]। यं कालं शुष्का भवन्ति कल्पियकुटीं प्रवेशिय स्थापयितव्याणि यथास्थानं। यं तत्र भवति दुग्धघटं वा दधिघटं वा व्यञ्जनगोलका वा ते सुधोतां [15. A. P. 2. L. 5.] सुप्रक्षालितां कारापिय आतपे स्थापयितव्याः[३]। यं कालं शुष्का भवति ततो कल्पियकुटिं प्रवेशिय स्थापयितव्याः यं तत्र भवति शतपोतनको वा ताम्रपात्रा वा लोहपात्रा वा कटच्छुका वा तदुका[४] वा चपका वा पलीनका वा निर्मादिता कारापिय कल्पियकुटिं प्रवेशिय यथास्थाने स्थापयितव्यानि[५]।

एता भवन्ति [15. A. P. 2. L. 6.] भाणिका वा खालुका वा दुर्वा वा कण्डहस्ता वा कर्कटका वा प्रस्फोटिय सुधोतां सुप्रक्षालितां करिय आतपे शोपयितव्या। यं कालं शुष्का भवन्ति ततो कीलकेहि ओलाम्बित्वा स्थपितव्या यथा न खज्जेय उक्कासिय स्थपेतव्या। एते खज्जकचंगेरीयो वनफल[६]चंगेरीयो हरीतकीचङ्गेरीयो वा प्रस्फोडिय सुप्रक्षालितां करिय एकमन्ते स्थापेतव्या।

एते भवन्ति [15. A. P. 2. L. 7.] वस्त्राभरणका वा परिश्रावणा वा चतुरस्रका वा साहरित्वा[७] कीलकेहि[८] ओलम्बित्वा[९] स्थापयितव्या[१०] यथा

१. Ms. शब्दात्रिय।
२. Ms. सूर्यादिमुखं।
३. Ms. स्थापयितव्यं।
४. Ms. तद्दुका।
५. Ms. प्रवेशयितव्यानि।
६. Ms. वनपाल।
७. Ms. माहरित्वा।
८. Ms. कीणकेहि। cf. The previous line.
९. Ms. ओलापित्वा।
१०. Ms. स्थपायतव्या।

न खदूर्येसु[१] ।

एता भैषज्यपिपरिणका शिला । न दानि कार्यं[२] कृत्वा यथा येव प्रतिलिम्पिका स्थापेतव्या[३] । अथ खलु सुधोवित्वा यथास्थाने स्थापयितव्या । नापि दानि कल्पिक कुटी अध्युपेक्षितव्या । ओद्रिद्रणका वा प्रलुगिंका[४] वा अचौक्षा वा अप्रतिसंस्कृता वा अथ ख-[15. B. P. 2. L. 1.]लु कालेन कालं यदि ताव तृणच्छन्ना भवति तृणपुलको दातव्यो । गोमयकार्षी दातव्या । अभीक्ष्णं सम्मार्जयितव्यं । अथ दानि तृण प्रवेशिका भवन्ति एकान्ते स्थपेतव्यं । एवं यत्किञ्चित्संघस्य भाण्डं यो तत्र अभियुक्तो भवति तेन तं प्रतिसामेतव्यं ।

एते भवन्ति रङ्गगोलका वा रङ्गघटका वा रङ्गकुटका वा रङ्गकटहका वा मासवारिकस्य वा [15. B. P. 2. L. 2.] यत्कस्य वा आधीनं भवति । एषो भिक्षु[५] धोवनिका वा कर्त्तुकामो भवति मासवारिको वा पक्षवारिको वा याचितव्यो[६] । अथ दानि द्वे जना याचन्तीति[७] तेन वृद्धतरकस्य दातव्यं[८] । अथ दानि वृद्धतरकस्य चिरकालो भवति नवतरकस्य इत्वरकालिकं भवति नवतरकस्य दातव्यं । अथ दानि उभयेषां इत्वरकालिकं वृद्धतरकस्य दातव्यं । उभये-[15. B. P. 2. L. 3.]षां चिरकालिकं भवति वृद्ध-

१. Ms. नद्‌येंसु, But cf. the previous line.

२. Ms. काय ।

३. Ms. स्थपेतव्या ।

४. Ms. प्रलगिंका ।

५. Ms. भिक्षू ।

६. Ms. °तव्या ।

७. Ms. जनायां चरतीति ।

८. Ms. ज्ञातव्यं ।

तरकस्य दातव्यं। तेन धोवनिका वा रजनिका वा करिय न क्षमति तथाय्येव[1] उपमक्षितं वा रंगरक्षितं वा अधोतकं वा अनुपलिप्तकम्वा दयितुं (न क्षमति)[2]। अथ खलु सुधोतं सुप्रक्षालितं सुलिप्तं सुशुष्कं करियाणं चीवररक्तं, न दानि चीवरं रंजेत्वा न तथा येव वितनिका उज्झित्वा गन्तव्यं। अथ ख-[15. B. P. 2. L. 4.]लु साहरित्वा यथास्थाने स्थापयितव्यं।

वड्ढकि भाण्डं[3] भवति। नासिते वा दानि या वा विशालिका वा सूत्रं वा[4] ओलम्बिको धोवित्वा एकान्ते स्थपेतव्या। तक्षाणं[5] भाण्डं भवति कुठारो[6] वा वासीयो वा विहरणको वा निखादनको[7] वा अड्ढिला वा एकान्ते स्थपेतव्या। एता भवन्ति वासीयो वा कुद्दालका वा निश्रेणियो वा [15. B. P. 2. L. 5.] न दानि तथा येव[8] मृत्तिका प्रलिप्तिका स्थपेतव्या। अथ खलु धोवित्वा[9] यथास्थाने स्थापयितव्यो। तच्चेवं चातुर्देशं साधिकं[10] भण्डकं रिक्त[11] परिभोगं। न दानि कार्यं कृत्वा विहारे गोपेत्वा[12] स्थापेतव्यं—पुरो कृत्यं सुखं भविष्यति। अथ खलु यस्यैवं

१. Ms. तथाप्येव।

२. Obviously the bracketted words are superfluous.

३. Ms. वट्टकि भण्डं।

४. Ms. थ।

५. Ms. भक्षाण।

६. Ms. कुणरो।

७. Ms. निवादनको।

८. Ms. ये च।

९. Ms. बोधि सत्वा।

१०. Ms. शधिकं।

११. Should be नित्य or मुक्त।

१२. Ms. शेपित्वा।

कार्यम्भवति तस्यैवन्दातव्यं । एवं भाण्डे प्रतिपद्यितव्यं । [15.B.P.2. L.6.] न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥

भगवान् श्रावस्त्यां विहरति विस्तरेण निदानं कृत्वा अपरे हि विहारके संबहुला भिक्षू प्रतिसंक्रमन्ति । सो दानि विहारको उप्येडनको । अपरो च भिक्षु विरात्रे उश्वासकारको वा प्रश्वासकारको वा निर्धावितो[१] भवति । सचीवरं चीवरवंशातो हृपियाणं पतितो। ए- [15. B. P. 2. L. 7.]वं भूमीये पतितो । तं दानि एकेन आक्रान्तं द्वितीयेन आक्रान्तं तृतीयेनाक्रान्तं सर्वं कर्दमेहि अनुप्रविष्टं । चीवरकोणको अवशिष्टो । सो दानि अपरेज्जुकातो कल्यतो[२] एव निवासिय प्रावरिय चीवरकं मार्गति न लभति । तेन दानि मार्गन्तेन सो चीवरकोणको दृष्टो तं दानि तहिं चीवरकर्णके गृह्णिय अच्छियं चटन्ति सर्वं फाटितं[३] ।

ए-[15. A. P. 3. L. 1.]तं प्रकरणं भिक्षू भगवतो आरोचयेंसु । भगवानाह—शब्दापयथ तं भिक्षुं । सो दानि शब्दापितो । भगवानाह—एवं च त्वं भिक्षु चीवरकं चीवरकोणके गृह्णिय अच्छोसि च चटन्ति सर्वं फाटितं । तेन हि एवं चीवरे प्रतिपद्यितव्यं । किन्तिदानि एवं चीवरे प्रतिपद्यितव्यं ? एते दानि संबहुला [ संबहुला ][४] भिक्षुः एकहि विहारके प्रतिक्रमन्ति । यदि[५] [15. A. P. 3. L. 2.]ताव सो उप्येडनको[६] विहारको

१. Ms. निर्धारितो ।

२. Ms. अपरेज्ञकातो कल्पत ।

३. Ms. संचयोचितं, but cf. The next line.

४. The bracketted word obviously is an extra one.

५. Ms. पदे ।

६. In some places it is also उप्पिडनको ।

भवति नापि चमति भिक्षूहि मुक्तकं चीवरं स्थापयितुं[१]। अथ खलु चीवरकानि समाहरितानि कारिय अन्तरमुख दुगुणान्तरं करिय चीवरवंशे स्थापेतव्यानि। ततो पट्टिकाये वा लोठकेन वा रज्जुकाये[२] वा बन्धितव्यानि। उपाध्यायस्य [वा] आचार्यस्य वा चीवरं साहरित्वा अभ्यन्तर परिकर्मं द्विगुणान्ते [15. A P. 3. L. 3.] अग्रतो कर्त्तव्यो अन्तर पीडितो। न दानि उपाध्यायस्य वा आचार्यस्य [वा] चीवरेहि आत्मनो चीवरं वेठयितव्यं।

अथ खलु आत्मनो चीवरेहि उपाध्यायाचार्याणां चीवरा वेठयितव्याः। एवं सर्वेहि बन्धिय[३] थपेतव्यानि। अथ दानि भिक्षु विरात्रकाले उश्वासकारो वा प्रश्वारकारो वा निर्द्धावति[४]। चीवरवंशकातो [15. A.-P. 3. L. 4.] चीवराणि मुंचिय एकं द्वितीयं वा तृतीयम्वा हृपियाणां[५] भूमीयं पतितं। एकेनाक्रान्तं[६] द्वितीयेन आक्रान्तं तत्रैव सर्वं भूमीये अनुप्रविष्टो भवति। अपरेज्जुकातो भिक्षु कल्यतो येव निवासिय प्रावरिय चीवरकाणि मार्गति। सो मार्गन्तो न पश्यति तस्य चीवरकस्य कोणकं। नापि चमति तहिं चीवरकोण-[15. A. P. 3. L. 5.]के गृह्णिय अच्छितुं। मा चीवरकोणको भवतु। मा चीवरकोति। अथ खलु ततो कोणकातो प्रभृति सुखाकं मोचयितव्यं। चीवरकं धोविय विहारकोणके [थ]पितव्यो तं चीवरकं। यं कालं शुष्कं भवति ततो परिभुञ्जयितव्यं। अथ दानि भिक्षु उपाध्यायस्य वा आचार्यस्य वा चीवराणि उपरि स्थापयित-[15.A.P.3.L.6.]-

१. Ms. स्थापयितु।
२. Ms. रेजुकाये।
३. Ms. वन्दिय।
४. Ms. निर्हावति।
५. Ms. लुपियाणं, but cf. 15B. P2. L7. ante.
६. Ms. एकेन कान्तं।

व्यानि[1]। अथ दानि सो उप्पंसुलको[2] विहारको भवति नापि त्तमति उपाध्यायस्य वा आचार्यस्य वा चीवरकानि उपरि स्थापयितुं आत्मनो चीवरकानि हेट्ठे स्थापयितुं[3]। अथ खलु उपाध्यायस्य वा आचार्यस्य वा [चीवराणि] हेट्ठे स्थापयितव्यानि आत्मनो चीवराणि उपरि स्थापयितव्यानि। नापि त्तमति ग्रीष्मका भवति रजो वातरजो वा उक्कनि-[15. A. P. 3. L. 7.]का चीवरं विनाशेति। न[4] दानि उपाध्यायाचार्याणां चीवरकेहि आत्मनो चीवरा वेठयितव्या। अथ खलु आत्मनो चीवरेहि उपाध्यायाचार्याणां चीवरा वेठितव्या। न दानि त्तमति विहारो अध्युपेक्षितुं उप्पंसुलो वा अचौक्षा वा। अथ खलु कालेन कालं सिञ्चित्वा सम्मार्जितव्यं। गोमयकार्षी दातव्या। वंघोरिका[5] दातव्या। न त्त-[15. B. P. 3. L. 1.]मति चीवरेणाप्रसन्नं गृह्णितुं खेटकटाहम्वा उच्चारकटाहम्वा प्रस्रावकुम्भकं वा संकारं वा उज्झितुं उपानहा गृह्णितुं गोमयानि वा उच्चनितुं[6]। न त्तमति चीवरं अध्युपेक्षितुं। चिक्कनं वा अप्रतिसंस्कृतं वा श्रोमयिलमयिलम्वा पाटितविपाटितम्वा। अथ खलु कालेन कालं धोवितव्यं रंजितव्यं सीवितव्यं। यथाच्छवि एवं चीवरे प्रतिपद्यि-[15. B. P. 3. L. 2.]तव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

---

१. Ms. स्थप°।
२. Ms. उप्पं मुलको।
३. Ms. स्थपयि°।
४. Ms. ने।
५. Ms. वंधोरिका।
६. Ms. उच्चिनित्तं।

## उद्दानं :—

एवं अरण्ये प्रतिपद्यितव्यं ।

एवं ग्रामान्तिके प्रतिपद्यितव्यं ।

एवं पानीये[1] प्रतिपद्यितव्यं ।

एवं परिधोवनिये प्रतिपद्यितव्यं ।

एवं पादा धोवितव्या ।

एवं पादधोवनिके प्रतिपद्यितव्यं ।

एवं स्नाने प्रतिपद्यितव्यं ।

एवं जेन्ताके प्रतिपद्यितव्यं ।

एवं भाण्डे[2] प्रतिपद्यितव्यं ।

एवं चीव-[15.B. P.3.L.3.]रे प्रतिपद्यितव्यं ॥३॥

॥ पञ्चमो वर्गः ॥

---

१. Ms. जानीये ।

२. Ms. भण्डे ।

## [ षष्ठो वर्गः ]

भगवान् श्रावस्त्यां विहरति। ते दानि आयुष्मन्तो षड्वर्गिका कल्यितो[1] एव विहारचरणकानि निवासनानि निक्षिपियाणं नग्नप्रावृता ग्रामप्रवेशिकानि निवसनानि मार्गन्ति। गोचरातो निर्द्धाविता ग्रामप्रवेशनिकानि निवासनानि निक्षिपियाणं नग्नप्रावृता विहारचरणकानि निवास-[15. B. P. 3. L. 4]नानि[2] मार्गन्ति। एतं[3] प्रकरणं भिक्षुहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ षड्वर्गिकां। ते दानि शब्दापिताः। भगवानाह—सत्यं भिक्षवो षड्वर्गिका, एवं नाम यूयं कल्यतो[4] एव उत्थिय[5] विहारचरणकानि चीवरकानि निक्षिपित्वा नग्नप्रावृता ग्रामप्रवेशनिकानि निवसनानि[6] मार्गथ। गोचरातो [15. B P 3. L. 5.] निर्द्धाविता[7] ग्रामप्रवेशनिकानि निवासनानि निक्षिपित्वा नग्न प्रावृता। विहारचरणानि[8] निवासनानि[9] मार्गथ। आहंसु—आम भगवन्। भगवानाह—तेन हि एवं निवासितव्यं। किन्तिदानि एवं निवासितव्यं? भिक्षुणा ताव कल्यतो[10] एवोत्थित्वा गोचरं

---

१. Ms. कल्पत।
२. Ms. निवसकानि।
३. Ms. एते।
४. Ms. कल्पत।
५. Ms. उत्थिय।
६. Ms. वसनानि।
७. Ms. निर्धारिता।
८. Ms. विहाचरकानि।
९. Ms. निर्वासनानि।
१०. Ms. कल्पत।

प्रविशंतेन न क्षमति ग्राम प्रवेशनिकं निवासनं अनुपहस्तं कृ-[15. B. P. 3.-L. 6.]त्वा विहारचरणकं निवासनं[1] निक्षिपितुं। अथ खलु प्रकृत्येव ताव ग्रामप्रवेशनकं उपहस्तं कर्त्तव्यं। ततो ग्रामप्रवेशनं च निवासनं आवेल्लयितव्यं। विहारचरणकं निवासनं उद्वेल्लयितव्यं[2]। काय बन्धनं बन्धयित्वा चीवराणि प्रावरित्वा[3] गोचरं प्रविशितव्यं। गोचरातो निर्द्धावितेन नापि क्षमति विहारचरणकं निवासनं अनुपह-[15. B. P. 3. L. 7.]स्तं करियाणं ग्रामप्रवेशनकं निवासनं निक्षिपितुं। अथ खलु प्रकृत्येव ताव विहारचरणकं निवासनं उपहस्तं कर्त्तव्यं। ततो विहारचरणकं निवासनं आवेल्लयितव्यं। ग्रामप्रवेशनकं च निवासनं उद्वेलयितव्यं। ते भिक्षू उद्धारकं कर्त्तुकामा भवन्ति उपलेपनं वा संमार्जनं वा भवति स्नानशाटकं वा लेङ्कटखण्डकं वा[4] निवासि-[15. A. P. 4. L. 1]य[5] स्नातुकामो भवति नापि क्षमति निवासनं निक्षिपित्वा स्नानशाटकं वा लेङ्कटखण्डकं [वा] निवासयितुं। अथ खलु निवासनं उद्वेलयितव्यं[6]। स्नानशाटिका वा लेङ्कटखण्डकं [वा] आवेठयितव्यं। निवासनं उद्वेलयितव्यं[7]। नापि क्षमति स्नानेन समानेन निवासनं निवासयित्वा कामभोगिना यथा उपरिमेण निवासनस्य स्नानशाटिकां उत्क्षिपितुं। नापि क्षमति हे-[15. A. P. 4. L. 2]ष्ठेन स्नानशाटिकाम्वा लेङ्कटखण्डकम्वा ओसारयितुं चलनकं यथा। अथ खलु निवासनं

१. Ms. निवसनं।

२. Ms. उच्चे चल्लयितव्यं, but cf. the next line.

३. Ms. प्रचरित्वा।

४. Ms. खण्डक स्य।

५. Ms. नेनासिय।

६. Ms. उच्चेल्लयितुं।

७. Ms. उच्चेल्लयितव्यं।

आवेल्लयितव्यं[1] स्नानशाटकं वा लेङ्कटखण्डकम्त्रा उद्वेलयितव्यं[2]। एषो भिक्षु विकाले प्रतिक्रमति[3]। नापि क्षमति निवासनं निक्षिपित्वा नग्नप्रावृतेन रात्रि प्रावरण [कं] निवासनकं[4] मार्गितुं। अथ खलु प्रतिक्रत्येव ताव रात्रिप्रावरणकं निवासनं उप-[15. A. P. 4. L. 3.]हस्ती कर्त्तव्यं। ततो निवासनं उद्वेल्लयितव्यं[5] रात्रिप्रावरणं निवासनं च आवेल्लयितव्यं। एवं निवासने प्रतिपद्यितव्यं। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यान्विहरति। ते दानि आयुष्मन्तो षड्वर्गिका गोचराये प्रस्थिता विहारचरणकानि चीवरका[नि] निक्षिपिय एक-[15. A.-P. 4. L. 4.]निवासना ग्रामप्रवेशकानि चीवरकानि मार्गन्ति। गोचरातो निर्धाविता ग्रामप्रवेशनकानि चीवराणि निक्षिपित्वा एक निवासनका विहार-चरणकानि चीवरकानि मार्गन्ति। एतं प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह—शब्दापयथ षड्वर्गिकान्। ते दानि शब्दापिताः [15. A. P. 4. L. 5.]। भगवानाह—सत्यं भिक्षवो षड्वर्गिकाः, एवन्नाम यूयं कल्यतो[6] येत्र गोचराय प्रस्थिता विहार चरणकानि चीवराणि निक्षिपिय एक निवसना ग्रामप्रवेशनकानि चीवराणि मार्गथ। गोचरातो निर्धाविता ग्रामप्रवेशनिकानि चीवराणि निक्षिपित्वा एक निवासनका विहार [चरणकानि] चीवरकानि मार्गथ। आहंसु—आ-[15. A. P. 4. L. 6.]म भगवन्।

---

१. Ms. उच्चेलयितव्यं।
२. Ms. उच्चेलयितव्यं।
३. Ms. प्रतिक्षमति।
४. Ms. निवासिनं।
५. Ms. उच्चेयितव्यं।
६. Ms. कल्पतो।

भगवानाह—तेन हि एवं प्रावरितव्यं। किन्ति दानि एवं प्रावरितव्यं? एषो दानि भिक्षुः कल्यतो[1] येव गोचराये प्रस्थितो भवति। नापि क्षमति विहारचरणकानि चीवरकाणि निक्षिपिय एकनिवसनेन ग्रामप्रवेशनिकानि चीवराणि मार्गितुं। अथ खलु प्रकृत्येव ताव ग्रामप्रवेशनकं चीवरं उपहस्तं कर्त्तव्यं। प्रावरन्तेन ग्राम-[15. A. P. 4. L. 7.]प्रवेशनकं चीवरं आवेल्लयितव्यं[2] विहारचरणकं चीवरं उद्वेल्लयितव्यं। गोचरातो निर्गतेन नापि क्षमति ग्रामप्रवेशनकं चीवरं निक्षिपित्वा एकनिवसनेन विहारचरणकं चीवरं मार्गितुं। अथ खलु प्रकृत्येव[3] ताव विहारचरणकं चीवरं उपहस्ती कर्त्तव्यं। प्रावरमाणेन विहारचरणकं चीवरकं आवेल्लयितव्यं ग्राम प्रवे-[15. B. P. 4. L. 1.]शनकं चीवरं उद्वेल्लयितव्यं। एवं आरामचरणकं वा आवेल्लयितव्यं[4] विहारचरणकं वा उद्वेल्लयितव्यं। प्रस्फोटयित्वा साहरित्वा एकान्ते स्थापयितव्यं। एतन्दानि संघस्य उद्वानकानि भवन्ति च्छादनिका वा लेपनिका वा सम्मार्जनको वा भिक्षु चीवरकाणां दयार्थां[5]। अन्यं लेङ्कटखण्डं प्रावरितुकामो भवति नापि क्षमति चीवरकं निक्षिपियाणं एकनिवसन-[15. B. P. 4. L. 2.]केन लेङ्कटखण्डं मार्गितुं। अथ खलु प्रकृत्येव ताव उपहस्ती कर्त्तव्यं। एकं च आवेल्लयितव्यं द्वितीयं उद्वेल्लयितव्यं। एवं प्रावरितव्यं[6]। न प्रतिपद्यति अभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

---

१. Ms. कल्पतो।

२. Ms. उच्चेल्लयितव्यं।

३. Ms. प्रकृतेव।

४. Ms. अद्वेल्लयितव्यं।

५. Ms. दयात्वं। Anyhow, still the meaning is not clear.

६. Ms. प्राचरितव्यं।

भगवान् श्रावस्त्यां विहरति । ते दानि आयुष्मन्तो नन्दनोपनन्दना गोचरं प्रविशन्ता [चीवरं] कटन्ता प्रविशन्ति । कण्टकशाखाहि लग्नं भवति । द्रन्ति अच्छुन्ति साडे वा वृ-[15. B. P. 4. L. 3.]क्षशाखा-याम्वा लग्नं द्रन्ति कटन्ति । नैव धूलिं परिहरन्ति न कर्दमं परिहरन्ति । संवाधरथ्याहि सुधा पाण्डुलेपना भित्तियो घसन्ता[1] गच्छन्ति । तानपि दानि चीवरकानि ओमइलोमइलाणि[2] पाटितविपाटितानि क्रियन्ति[3] । तेषान्दानि साद्र्धे[4]विहारिका च अन्तेवासिका च ओध्यायन्ति । वयं पि[5] च ताव चीवरकानि धोवेन्ता सीवेन्ता रंजन्ता तलविलयं[6] गच्छाम । [15. B. P. 4. L. 4.] इमेपि न जानन्ति कथमन्तरघरे प्रविशन्तेहि चीवरेहि प्रतिपद्यितव्यं ।

एतं प्रकरणं भिक्षूहि श्रुतं । भिक्षू भगवतो आरोचयेंसु । भगवानाह— शब्दापयथ नन्दनोपनन्दनां । ते दानि शब्दापिताः । भगवानाह— सत्यं भिक्षवो नन्दनोपनन्दना एवं नाम यूयं अन्तरघरं[7] प्रविशन्ता चीवरकानि कटन्ता गच्छथ । त-[15. B P. 4. L. 5.]देव सर्वं भगवान् विस्तरेण प्रत्यारोचयति । युष्माकं साद्धेंविहारिका[8] अन्तेवासिका ओध्यायन्ति । वयं पि[9] च ताव चीवरकानि धोवंता सीवन्ता रञ्जेन्ता तलविलयं

१. Ms. सुरा पाण्डुलेपना तिन्ति योधसन्ता ।

२. Ms. ओमइल स इलाणि ।

३. Ms. क्रियन्ते ।

४. Ms. सर्व विहारिका ।

५. Ms. ये ।

६. Ms. उलविलयं, but cf. the line after next.

७. Ms. अन्तरं घरं ।

८. Ms. सर्वे विहारिका ।

९. Ms. येव ।

गच्छाम। इमेपि न जानन्ति कथं अन्तरघरं प्रविशन्तेहि चीवरकेहि प्रतिपद्यितव्यं। आहंसु—आम भगवन्। भगवानाह—तेन हि एवं अन्तरघरं[1] प्रविश-[15. B. P. 4. L. 6.]न्तेन चीवरे प्रतिपद्यितव्यं। किन्तिदानि एवं अन्तरघरं प्रविशन्तेन चीवरे प्रतिपद्यितव्यं? नायं ताव क्षमति भिक्षुणा अन्तरघरं प्रविशन्तेन चीवरं कड्ढन्तेन प्रविशितुं। यहिं लग्नं तहिं[2] लग्नं यहिं पाटितं तहिं पाटितं[3]। अथ खलु यदि ताव ग्रीष्मकालो भवति दूरे च ग्रामो भवति शीर्षे वा स्कन्धे [वा] चीवरं कृत्वा गन्तव्यं। यदा ग्राममूलग-[15. B. P. 4. L. 7.]तो भवति यदि तहिं ओघो वा[4] तडागम्वा भवति पुष्करिणी वा तहिं पादां प्रक्षालित्वा चीवरं प्रावरित्वा गण्ठिपाश्वं आवन्धित्वा प्रविशितव्यं। अथ दानि उदकं न भवति पत्र[5] शाखाय वा तृणकेहि वा पादा जंघा प्रस्फोटित्वा प्रावरित्वा प्रवेष्टव्यं। अथ दानि हेमन्तो भवति प्रावरित्वा गन्तव्यं। परिमण्डलं चीवरं प्रावरित्वा अन्तरघरं प्रविशित-[15. A. P. 5. L. 1.]व्यं। परिवर्जित्वा भ्रान्तो वा अश्वो भ्रान्तो वा हस्ती भ्रान्तो वा रथो अश्व वडवा वा ओहर पारयुक्त[6] कण्टकशाखा परिवर्जन्तेन सुधा पाण्डुलेपनायो[7] परिवर्जन्ते[न] प्रविशितव्यं। अथ दानि भिक्षुस्य यत्नं करेन्तस्य चीवरं धूलिये पूरितं भवति प्रस्फोटयितव्यं। कर्दमेन वा विनाशितं[8] भवति धोवितव्यं। कण्टकशाखायां वा लग्नं भवति

१. Ms. अन्तराघरं।
२. Ms. लहिं।
३. Ms. यहें....तहें।
४. Ms. रा।
५. Ms. यत्र।
६. Ms. पारपु।
७. Ms. पाण्डलपिमा यो।
८. Ms. विनाशितव्यं।

वयं येव ताव चीवराणि धोवेन्ता सीवेन्ता रञ्जेन्ता तलविलयं गच्छामः। इमे पि न जानन्ति कथं अन्तरघरं प्रविष्टेहि[१] चीवरेहि प्रतिपद्यितव्यं।

एतं[२] प्रकरणं भिक्षूहि श्रुतं। भिक्षू भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ नन्दनोपनन्दनां। ते दानि शब्दापिता। भगवानाह— स-[ 15. A. P. S. L. 5.]-त्यं भिक्षवो नन्दनोपनन्दना, एवं नाम यूयं अन्तरघरं प्रविष्टा समाना दारकदारिकाहि मञ्चञ्च पीठञ्च त्रेपएयका च पादेहि मर्दितविमर्दिता। धूलीये कर्दमेहि विनाशितकेहि[३] प्रज्ञप्तेहि निषीदथ। सुधा पाण्डुलेपनाहि भित्तीहि घसंता प्रविशथ। चीवराणि विनाशयन्ति। युष्माकं सार्धेविहारिका अन्तेवासिका ओध्याय-[ 15. A. P. S. L. 6. ]- न्ति— पश्यथ भणे, वयं पिच चीवरकानि धोवन्ता सीवन्ता रञ्जेन्ता तलविलयं गच्छामः। इमे न जानन्ति अन्तरघरं प्रविष्टेहि कथं चीवरे[४] प्रतिपद्यितव्यं। आहंसु— आम भगवन्। भगवानाह— तेन हि एवं[५] अन्तरघरं प्रविष्टेहि चीवरे प्रतिपद्यितव्यं। किन्तिदानि एवं अन्तरघरं प्रविष्टेहि चीवरे प्रतिपद्यितव्यं? एषो 'दानि भिक्षुः अन्तरघ-[ 15. A. P. S. L. 7. ]-रं प्रविष्टो आसनेन निमन्त्रीयति। आसनं जानितव्यं। यदि ताव आसनं भवति धूलीये वा अच्छितं कर्दमेन वा विनाशितकं। ओमइलोमयिलं[६] वा प्रज्ञप्तकं[७] भवति न क्षमति तहिं[८] उपविशितुं। यदि ताव भिक्षुस्य विश्रम्भ-

१. Ms. प्रविष्टेह
२. Ms एवं।
३. Cf. 15. A. P. 5. L. 3.
४. Ms. चीवरोहि।
५. Ms. येवं।
६. Ms. ओभइल ।
७. Ms. प्रज्ञसिकं।
८. Ms. तर्हि।

कुलं[1] भवति। वक्तव्यं— भगिनीयो, आसनं प्रज्ञपेथ। मा चीवरकानि विनशिष्यन्ति। यं कालं तहिं प्रज्ञप्तं भवति आमिला वा अस्तरि–[15. A. B. P. 5. L. I.]–का वा कोचको वा कलन्तरको पट वा ततो निषीदितव्या। अथ दानि अश्राद्धकुलं भवति— भिक्षुस्य वा अविस्रम्भकुलं[2] भवति ततो च स्तूपिकं वा सांघिकं वा कार्यं अधीनं भवति नापि क्षमति तथा येव निषीदितुं। अथ खलु लेड्डुटखण्डेन रजोहरणकेन वा प्रस्फोटिय[3] कंसकलिकां[4] प्रज्ञपिय उपविशितव्यं। अथ दानि एवं पि न[5] भवति अन्त–[15. B. P. L. S. 2.]–मसतो[6] हस्तेनापि प्रस्फोटिय आमर्जिय उपविशितव्यं। नापि क्षमति अन्तरघरे प्रविष्टेन सुधापाण्डुलेपना भित्तीयो घसन्तेन[7] अतिक्रमितुं। न क्षमति सापाश्रयं वा ओपाश्रयं वा ओमयिलोमयिलं वा पण्डरविपण्डरं अपाश्रयितुं। अथ दानि भिक्षुः जरादुर्बलो वा व्याधिदुर्बलो वा भवति, वक्तव्यं— भगिनी, प्रज्ञपेहि कुड्डस्मि[8] यहिं[9] अपाश्र–[15. B. P. 4. L. 3.]–यितव्यं। यं कालं तहिं विंबोहनं[10] वा अमिला वा अस्तरिका वा कोचको वा शाटको वा प्रज्ञप्तो भवति। ततो अपाश्रयितव्यं। अथ दानि अश्राद्धकुलं भवति न वा भिक्षुस्य विश्रम्भकुलं अन्तमसतो संकच्छिका पि स्कन्धे दत्वा अपाश्रयितव्यं। न क्षमति

१. Ms. विस्रम्भ°, probably it isविश्वस्त°, cf. Pali–विस्सत्थ।
२. अविश्वस्त ? but in Pali it is अविस्सत्थ।
३. Ms. प्रस्योढिय।
४. Ms, कसंकलिकां, but meaning is douftful. संकच्छिका ? cf. the last line.
५. Ms. येन।
६. Ms. अन्तमस्तो।
७. Ms. भित्तीय सतेन।
८. Ms. कुदृस्मि।
९. Ms. यिहिं।
१०. Ms. उर्हे विवोहनं।

अन्तरघरं प्रविष्टेन चीवरकेन प्रतीच्छितुं। सर्पि[1]खज्जकं [15. B. P. 5. L. 4.] [वा] तैलखज्जकं वा उक्येनका वा तण्डुला [वा] प्रतिच्छितुं। क्लिन्नकानि वा पुष्पाणि प्रतिच्छितुं। क्षुद्रपाकानि वा फलानि[2] प्रतिच्छितुं। विक्षुण्णम्वा पात्रं गृह्णितुं। चिक्कना वा हस्तान्निर्मादितुं। माल्यम्वा क्लिन्नकं चिक्कना वा ओष्ठानि निर्मादयितुं। लभ्यादानि[3] चीवरान्तरिकाय खकयटानि फलानि[4] गृह्णितुं। बदरानि वा कोलकानि वा आमलका–[15. B. P. 5 L. 5.] –नि वा हारीतकी वा तण्डुलानि वा अनोत्तीणका वा माल्यम्वा आक्लिन्नकं शिम्बटीयो वा। अथ दानि भिक्षुस्य यत्नं करेन्तस्य चीवरकं[5] कर्दमेन वा नासितं भवति धोवितव्यं। धूलीये वा ओतरितं भवति प्रस्फोटयितव्यं[6]। पाटितं वा विपाटितं भवति सीवितव्यं। एवं अन्तरघरे प्रविष्टेन चीवरे प्रतिपद्यितव्यं[7]। न प्रतिपद्यति आभि–[15. B. P. 5. L. 6.]समाचारिन्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यां विहरति। आयुष्मतो नन्दनस्य उपनन्दनो नाम भ्राता। सो दानि तस्य-सार्द्धं[9]विहारिकस्याह— एहि आयुष्मं, ग्रामं प्रवि-[शि] श्यामः। अहं च तत्र किञ्चिदेव अकल्पीयं अध्याचरिष्यामि। मा

---

१. Ms. सर्प्यं।

२. Ms. क्षुद्रयाकानि पलानि।

३. Ms. लन्यादानि।

४. Ms. पालानि।

५. Ms. चीवरक।

६. Ms. प्रस्यो°।

७. Ms. त्राहि।

८. Ms. प्रति पृच्छितव्यं।

९. Ms. सार्व्वें।

कस्यचि आचिचेसि। अहं खलु ते पितृयको[१] भवामि। सो दानि आह— पितृयको[२] भवाहि मातुलको भवाहि। [ 15. B. P. 5. l. 7. ] यदि त्वं तत्र किंचि[३] अकल्पियं अध्याचरिष्यसि आचिक्षिष्यामि अहं। सोदानाह— आचिक्षिष्यासि? आह—आचिक्षिष्यं। सो दानि आह—आगच्छाहं तव शेखयिष्यं[४]। ते दानि महान्तानि कुलान्युपसंक्रमन्ति। निमन्त्रीयन्ति— आर्य, भक्तकृत्यं करेथ। पुरे भक्तिकं करेथ खज्जकं खादथ। वनफलं[५] भक्षथ। यथा प्रतिमानकं[६] करेथ। सो दानि न कहिंचि अधिवासयति[७] [15. A. P. 7. L. 1.] पश्यति। मा इत्यस्य दातव्यं भविष्यतीति। यं कालं पश्यति नैव एषो प्रतबलो पिण्डाय आसितुं[८] न च प्रतिबलो जेतवनं संभावयितुं ति। ततो आह— आयुष्मन्, गच्छ त्वं, न मे त्वया सार्धं फासु[९] भवति कथाय वा निषद्याय वा। एकस्यैव मम फासु[१०] भवति। सो दानि शुष्केन मुखेन

---

१. Ms. पिन्दयको। Cf. next page.

२. Ms. पियको। Ibid.

३. Ms. के चे।

४. Ms. शेषयिष्यं।

५. Ms. वनपालं।

६. Ms. प्रतिभानकं।

७. * From this point there were interchanges of some pages in plate Nos. 15 B. and 15 A. respectively, perhaps, in course of a hurreid photography in Tibet. To maintain the sequence of the subject matter we have, however, rearranged the misplaced pages according to the following order: after 15 B. P 5. ll. 1–7 viz., 15 A. P 7. ll. 1–7, 15 B. P 7. ll. 1–7; 15 A. P. *6*. ll. 1–7; 15 B. P 6. ll. 1–7; and lastly. 15 A. P 8. ll. 1–7.

८. Ms. असितुं; In some places it is also अएिट्टु।

९. Ms. पठिसु।

१०. Ms. पठसु।

पाण्डुरेहि[1] ओष्ठेहि त्वरितत्वरितं निर्धावति कालं निध्यायमानो। सो [15. A. P. 7. L. 2.] दानि ततो येव अनुपरिवर्तिय महान्तेहि कुलेहि इप्सितान्नानि[2] भुक्ता। तस्यैव अनुपदमेव निर्धावितो। ये दानि भिक्षू जेतवनस्यारामद्वारकोष्ठकसमीपे स्थाने चंक्रमस्थाने निषद्या योगमनुयुक्ता विहरन्ति ते दानि तं पश्यन्ति उपशुष्केन मुखेन पाण्डुरेहि[3] ओष्ठेहि त्वरितत्वरितं निर्धावितं कालं निध्यायन्तं। तेषां भवति। यथा अयं उ-[ 15. A. P. 7. 3.]-पशुष्केन मुखेन पाण्डुरेहि ओष्ठेहि त्वरितत्वरितं निर्धावति कालं निध्यायमानो भवितव्यमयं विप्रलब्धो। ते दानि तं उच्चग्घन्ति— आयुष्मन्, स्निग्धो[4] खलु ते मुखवर्णो[5] पिलिपिलायन्ति ओष्ठा सुष्ठु खलु निर्धावियन्ति। यथापि[6] दानि नगरकुलोपकेन पितृयकेन सार्धं प्रविष्टस्य इप्सितान्नानि भोजनानि भु-[15. A. P. 7. L. 4 ]-क्तानिस्या। सो दानि आह— आयुष्मन्, कुतो मे इप्सितान्नानि भोजनानि भुक्तानि। एवं च एवं चास्मि विप्रलब्धो।

एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह— शब्दापयथ उपनन्दनं। सो दानि शब्दापितो। भगवानाह— सत्यं उपनन्दन, एवं नाम त्वं नन्दनस्य सार्धेविहारिं जल्पसि— एहि आयुष्मन्, [15. A. P. 7. L. 5.] ग्रामं प्रविशिष्यामः। अहं च तत्र किंचि अकल्पियं अध्याचरिष्यामि। मा खलु कस्यचि आचिक्षिष्यसि। अहं खलु ते पितृयको भवामि। तदेव

१. Ms. पाण्डुरहि।
२. Ms. इप्सितान्नाति।
३. Ms. पाण्डरेहि।
४. Ms. स्तिश्नो।
५. Ms. सुखवन्तो।
६. Ms. यथाये।

सर्वं भगवान् विस्तरेण प्रत्यारोचयति। याव सो दानि आह— आयुष्मन्, कुतो मे इप्सितान्नानि भोजनानि भुक्तानि। एवं च एवं चास्मि विप्रलब्धो। आह—आम भगवन्। भग-[15. A. P. 7. L. 6.]-वानाह— दुष्कृतं ते उपनन्दन। तेन हि एवं पुरेश्रमणेन प्रतिपधितव्यं। एवं पश्चाच्छ्रमणेन प्रतिपधितव्यं। नायं ताव क्षमति भिक्षुणा पश्चाच्छ्रमणो प्रवेशितुं यो न प्रतिबलो तस्य च आत्मनो च वृत्तिं संविभजितुं।

अथ खलु यो प्रतिबलो तस्य च [15. A. P. 7. L. 7.] आत्मनो च वृत्तिं संविभजितुं तेन पश्चाछ्रमणो प्रवेशयितव्यो।

एषो दानि भिक्षु उपाध्यायस्य वा आचार्यस्य वा पश्चाछ्रमणो गच्छति नापि क्षमति तेन दूरं पृष्ठतो गन्तुं नापि क्षमति खुरेण खुरं हनन्तेन। अथ खलु नात्याविदूरं नात्यासन्नं गन्तव्यं। तेनापि दानि पुरेश्रमणेन नापि क्षमति पाड़ेन यथा उड्डिताये ग्री-[15. B. P. 7. L. 1.]-[वा] ये[1] गन्तुं। अथ खलु युगमात्रं निध्यायन्तेन गन्तव्यं। अनेकाये भ्रान्तो वा हस्ति आगच्छेय। भ्रान्तो वा अश्वो भ्रान्तो वा रथो चण्डो वा श्वानो चण्डो वा गोणो आगच्छियन्ति। यदि ताव दक्षिणेनान्तेनागच्छति वामेनान्तेन उद्वर्त्तितव्यं[2] वामेनान्तेनागच्छन्ति दक्षिणेनान्तेन उद्वर्तितव्यं[3]। अथ दानि दुश्चक्षुको भवति जरादुर्बलो वा व्याधिदुर्बलो वा [15. B. P. 7. L. 2.] पश्चाछ्रमणेन वक्तव्यं— उपाध्यायो वा आचार्यो वा वामहस्तिकम्वा दक्षिणहस्तिकं वा उद्वर्त्तति[4]। अथ दानि न पश्यति हस्तेन गृह्णियानं एकतो वा एकतो वा उद्वर्त्तयितव्यो[5]। एषो च दानि भिक्षुस्य सार्धेविहारि वा अन्ते-

१. Ms. घाड़ेन यथा उद्दिताये श्री ये।

२. & ३. Ms. उद्वन्ति° and उद्दत्तितव्यं respectively.

४. Ms. उद्दत्तन्ति।

५. Ms. उद्वृत्तयि°।

वासि वा पश्चाछ्रमणं[१] प्रवेशेन्ति। यदि ताव प्रतिबलो भवति तस्य आत्मनो च वृत्तिं[२] संविभजयितुं प्रवेशयितव्यो। अथ दा-[15. B. P. 7. L. 3.]-नि न प्रतिबलो भवति प्रवेशितो च तेन भवति पश्चाच्छ्रमणो कालेन कालं विसर्जयितव्यो। तथा कर्त्तव्यं यथा प्रतिबलो भवति पिण्डपातम्वा अरिण्ठतुं विहारकं वा गन्तुं।

अथ दानि भिक्षुः शिरां विन्धापयितुकामो भवति बाहुशिरां वाङ्गुल्यशिरां वा निलाटिं वा। यदि ताव प्रतिबलो भवति पश्चाच्छ्रमणस्य [15. B. P. 7. L. 4.] आत्मनो वृत्तिं[३] संविभजितुं वक्तव्यं— आस त्वं सहितक[४], भुंजिय निर्धाविष्यामः[५]। यं कालं शिरा विन्धा भवति उभयेहि भुञ्जिय निर्द्धावितव्यं[६]। अथ दानि न प्रतिबलो भवति कालेन कालं विसर्जयितव्यो। वक्तव्यं-सुविहित, गन्तव्यं। आगमिष्यं अहं येन वा तेन[वा]सार्धं। तेनापि दानि पिण्डचारिकं वा अरिण्टियाण विहारं [15. B. P. 7. L. 5.] वा गच्छिय आहारं कृत्वा नापि दानि क्षमति दिन्ना मम आनन्तिकाति आदर्शनेन प्रियं कर्त्तुं। अथ खलु भुक्तं न भुक्तन्ति[७] अन्यस्य हस्ते पात्रं दत्वा तहिं गन्तव्यं। यदि ताव न विन्धा[८] शिरा भवति ग्लानस्य अनु-

---

१. Ms. पश्चाच्छ्रवर्णं।
२. Ms. वृत्तं।
३. Ms. चित्तं।
४. Ms. सहितकां ! cf. The following lines.
५. Ms. निर्धारिष्यामः।
६. Ms. निर्धारितव्यं।
७. Ms. भुक्तन्ते।
८. Ms. विद्धा।

काल्यं आहारं दत्वा सहितकेहि[1] निर्धावितव्या। अथ दानि दूरगोचरो संघारामो भवति भिक्षुस्य आत्मनो [15. B. P. 7. L. 6.] आहारपर्येष्टि पर्येषमाणस्य[2] विकालो भवति एवं पि करिय गन्तव्यं। यदि ताव सो शिरा विद्धा एव निर्धावति[3]। अयं प्रविष्टो भवति रथ्यान्तरं वा पश्यति ततोय्येव[4] निवर्त्तयितव्यं। नगरद्वारे पश्यति नगरद्वारतो निवर्त्तितव्यं। पन्थे पश्यति पन्थातो निवर्त्तितव्यं। यतो एव पश्यति ततो एव निवर्त्ति-तव्यं। अथ दानि कोचि वन्दति वक्तव्यं [15. B. P. 7. L. 7.]-अमुको वन्दति। अथ दानि निमन्त्रेति उपलक्षितव्यं पश्चाच्छ्रमणेन यतो निर्गतो भवति ततो आरोचयितव्यं अमुकेन उपाध्यायो निमन्त्रितो अमुकेन वा अन्तरघरे भुंजति। पुरेश्रमणो न प्रतिवलो भवति दक्षिणामादिशितुं। आहंसु— आदिश दक्षिणां। न दानि पश्चाच्छ्रमणेन वक्तव्यं— यथा येव अग्रासनं अग्रोदकं अग्रपिण्ड-[15. A. P. 6. L. 1.]पातं परिभुञ्जसि तथा येव दक्षिणामादिशाहि। अथ खलु आदिशितव्यं पश्चाच्छ्रमणेन। एवं पुरे-श्रमणेन प्रतिपद्यितव्यं। एवं पश्चाच्छ्रमणेन प्रतिपद्यितव्यं। न प्रतिपद्यति आभिसमाचारिकान्धर्मनतिक्रमति ॥३॥

भगवान् श्रावस्त्यां विहरति। अपेरणन दानि भिक्षुणा भिक्षू अध्येष्टा। आयुष्मन्, इच्छामि पिण्डपातं निकालियमा-[15.A. P. 6. L. 2.]-नं[5]। सो दानि आह— आनेहि पात्रं। सो दानि भिक्षु पिण्डपातस्य कृतेन प्रविष्टो। अयं पि देशकालं दन्तकाष्ठं गृहीत्वा आरामचारिका चंचूर्यति।

१. Ms. सहेतुकेहि।
२. Ms. °पर्यें पर्येव॰।
३. Ms. निर्धारति।
४. Ms. ततोय्येव।
५. Ms. निकालियमानि।

सो दानि भिक्षु पिण्डपातं गृह्णीय[१] आगतो। यात्र पश्यति सो विहारकं घट्टितकं। सो दानि मुहूर्त्तकं आगमियाणं यदा नागच्छति विहारकस्य द्वार-मूले पिण्डपात्रकं[२] थपिय गतो। तं दानि[३] आ-[15.A. P. 6. L. 3.]ह— अपरेण आगच्छियाणं उत्क्षिप्तं। सो दानि भिक्षुः विहारमागत्वा आगमेति। इदानीं पि एष्यति मुहूर्त्तं पि एष्यति। यात्र अकालीभूतं। ते दानि गत्यायं[४] कालस्य उभये समागता। सो दानि तस्य जल्पति— आयुष्मन्, साधु तं पात्रकं पि लभेम[५]। सो दानि आह— आयुष्मन्, कस्य पात्रं कुतो पात्रं। सो दानि आ-[15. A. P. 6. L. 4.]ह— आयुष्मन्, न त्वं मया[६] अध्येष्टो इच्छामि पिण्डपातं निकालियमानं। सो दानि आह— आयुष्मन्, यदा सो मया पिण्डपात्रको[७] विहारस्य पुरतो निक्षिप्तो। सो दानि आह— आयुष्मन्, एवं च त्वं शून्यके विहारके पात्रं निक्षिपिय गच्छसि। सो दानि आह— आयुष्मन्, एतं च त्वं मम पिण्डपातनीहार-[15. A. P. 6. L. 5.]कं अध्येपित्वा अदर्शनेन प्रियं करेसि। ते दानि विवदिता भगवतो मूलं गता। भगवानाह— नायं तात्र क्षमति नीहारिकपिण्डपातेन पिण्डपातनीहारकं अध्येपित्वा अदर्शनेन प्रियं कर्त्तुं। नापि क्षमति पिण्डपातनीहारकेन पिण्डपातमानयित्वा शून्यके विहारके ओसरिय गन्तुं। तेन हि एवं [15. A. P. 6. L. 6.] पिण्डपातनीहारकेन प्रतिपद्यितव्यं। एवं नीहार-पिण्डपातकेन प्रतिपद्यितव्यं।

---

१. Ms. गृह्णिय।
२. Ms. पिण्डपातकं।
३. Ms. आनि।
४. Ms. कत्याहं।
५. Ms. लतेम।
६. Ms. माया।
७. Ms. °पातको।

एतं दानि सर्वसंघस्य अन्तरघरे निमन्त्रणं भवति भिक्षु जरा-दुर्बलो वा व्याधिदुर्बलो [वा] भवति न प्रतिबलो गन्तुं। पिण्डपातनीहारको अध्येपितव्यो। वक्तव्यमायुष्मन्; इच्छामि पिण्डपातं निकालियन्तं ति वक्तव्यं— आयुष्मन्, मा ख-[15. A. P. 6. L. 7.]लु अदर्शनं गमिष्यसि। तेन अध्येष्टेन[1] समानेन दुवे[2] पात्राण्यादाय प्रविशितव्यं। यदि ताव हेमन्तकालो भवति लघुकालो अतिक्रमति दायकदानपती वक्तव्याः— देथ ग्लानस्य पिण्डपातं। यदि ताव दायकदानपती जल्पन्ति— भन्ते, पटि-पाटिकाय गृह्णथ। वक्तव्यं— दीर्घायु, भगवता अनेकपर्यायेण ग्लानो परि-[15. B. P. 6. L. 1.]न्दितो[3]। लहुं च कालो अतिक्रमति। यदि ताव देन्ति द्वे पिण्डपातका गृह्णितव्या आत्मनो च तस्य च। शक्तिद्वितकं[4] कृत्वा विहारकं आगन्तव्यं। अथ दानि ग्रीष्मो वा वर्षारात्रो वा कालो भवति चिरेण कालो अतिक्रमति पटिपाटिकाय गृह्णितव्यं। शिक्ताद्वितकं कृत्वा विहारकं गन्तव्यं। यदि तावद्यावदर्थं भक्तं दीयते प्रकृत्येव आत्मनो भक्ततो तस्य पात्रं पूरेतव्यं। [5. B. P. 6. L. 2.] अनुभागो आत्मनो गृह्णितव्यो। अथ दानि सो पतितित्तिणो भवति यत्तकं[5] दीयते तत्तकं गृह्णितव्यं। न दानि अप्रत्यग्रं गृह्णितव्यं। एकान्तेन सूपं[6] साकव्यञ्जनं वा गृह्णितव्यं। नापि दानि अधोतकेहि हस्तेहि अप्रयतेहि गृह्णितव्यं। अथ खलु

---

१. Ms. अध्यिष्टेन।

२. Ms. दूरे।

३. But Ms. is not very clear.

४. The Ms. is of difficult reading. These may be शिरस्थितकं or even णिकुजितकं। Probably Pali = निकुजितं or निक्कुजितं।

५. Ms. यतुकं।

६. Ms. यूयं।

प्रक्षालित्वा निर्मादयित्वा गृह्णितव्यं[१]। यदि उप्यक्टो[२] कालो भव-[15. B. P. 6. L. 3.]-ति न दानि तेन भुञ्जन्तेन आसितव्यं। अथ खलु उभये पिण्डपाता नीहर्तव्या। तेन गच्छन्तेन कालो निध्यापयितव्यो। यदि जानन्ति शक्यं सकालेन संभावयितुं गन्तव्यं। गच्छित्वा तस्य उपनामेतव्यं। अथ पश्यति उपक्यटो[३] कालो अन्तान्तिको न शक्यं सकाले संभावयितुं सो दानि उभये च्छिन्नभक्ता भविष्याम तेन [15. B. P.-6. L. 4. ] परिभुञ्जितव्यं। नापि क्षमति नीहारपिण्डपातेनापि अध्येष्टो मया पिण्डपातनीहारकोति अदर्शनेन प्रियं कर्तुं। अथ खलु प्रकृत्येव ताव दन्तकाष्ठं खादयितव्यं। हस्ता निर्मादयितव्या। पानीयं परिस्रावयितव्यं। कुण्डिकां परिपूरियाणं विहारस्य प्रहाणके द्वे आसनानि[४] प्रज्ञपिय अधिष्ठाना प्रतिग्राहापिय आसितव्यं। यं कालं [15. B. P. 6. L. 5.] आगतो भवति उपविशियाणं सहितकेहि भुंजितव्यं। अथ दानि सो जल्पति—आयुष्मन्, भुंज त्वं भुक्तं मयेति[५] च्छन्दयितव्यो। वक्तव्यो— ऊनकं[६] पूरेहि। यं ते रुच्यति तं खादेहि। यदि ताव आकांक्षति उपविशियाणं यं रुच्यति तं खादितव्यं। अथ दानि न कांक्षितव्यं— आयुष्मन्, भुंज त्वं नाहं भुंजिष्यं।

अथ दानि दूरगोचरो संघारामो [15. B. P. 6. L. 6.] भवति पिण्डपातनीहारको च चीरेण आगच्छति कालो च स्तोकावशेषो[७] भवति

१. This sentence has been repeated again in the Ms.
२. Pali उपकट्ठो कालो।
३. Also उप्यक्टो, cf. the previous line.
४. Ms. आसनाने।
५. Ms. भुक्तमयेति।
६. Ms. उनकं।
७. Ms. स्तोकावशेपो।

नीहारकपिण्डपातेन हस्ता निर्मादियाणं पानीयस्य कुण्डिकां पूरियाणं पन्थे[1] प्रत्युद्गच्छितव्यं। यत्र येव तं पश्यति तत्र येव पन्थानो उच्चत्तियाणं सहितकेहि भुञ्जितव्यं[2]। अथ दानि नीहारकपिण्डपातो न प्रत्युद्गच्छति कालो च अतिक्रमति पिण्डपातनीहारकेन त्वरित-[15. B. P. 6. L. 7.]-मागन्तव्यं। अथ दानि दूरे संघारामो भवति पिण्डपातनीहारकेन यत्रैव पानीयं पश्यति तत्रैव भुंजितव्यं। मा दानि वयं उभयेव भक्तच्छेदं करिष्याम। एवं पिण्डपातहारकेन प्रतिपद्यितव्यं। एवं नीहारपिण्डपातेन प्रतिपद्यितव्यं। न प्रतिपद्यति आभिसमाचारिकान्धर्मानतिक्रामति ॥३॥

भगवान् श्रावस्त्यां विहरति। ते दानि भिक्षू पिण्डाय च[3]-[15. A. P. 8. L. 1.]रमाणो अन्तरघरे याव उद्वानतो निर्घोटेन्ति। जनो दानि ओध्यायन्ति —पश्यथ भणे, श्रमणकाः याव उद्वाणातो निर्घोटेन्ति। नष्टं भ्रष्टं कुतो इमेषां श्रामण्यं। एतं प्रकरणं भिक्षू भगवतो आरोचयेंसु। भगवानाह— सम्यग्भिक्षवो जनो, ओध्यायति।

तेन हि एवं पिण्डाये चरितव्यं। नायं ताव क्षमति पिण्डचारिकेन या-[15. A. P. 8. L 2.]व उद्वानातो निर्घोटयितुं। नापि अदर्शनपथे स्थातुं। अथ खलु उद्देशे[4] स्थातव्यं दर्शनश्रवणपथे। न[5] दानि वक्तव्यं— पिण्डपातं महापुण्ये, देहि। अथ खलु तुष्णीकेन उद्देशे स्थातव्यं। न दानि इतो वा इतो वा निध्यायन्तेन आसितव्यं—मा पश्येंसु। चोरा वा ओचोरका

१. Ms. यन्थे।
२. Ms. भञ्जितव्यं।
३. The misplaced folios begin to come in order from this point ( 15B. P6. Ll. 1–7 to 15A. P8. Ll. 1–7 ).
४. Ms. उदेशे।
५. Ms. ने।

[वा] भवन्ति। अथ खलु षडायतनं मनसि करेन्तेन स्थात-[15. A. P. 8.-L. 3.]व्यं। चक्षुरनित्या याव मनो अनित्यन्ति स्थातव्यं। एषा स्त्री धान्यं ओहनन्ति। यदि ताव कुण्डिकापूरकमुक्कट्टय[1] ओच्चरकं प्रविशति जानितव्यं दास्यति एषा ति। अथ दानि परिवर्त्तियाणं भूयो निध्यायति जानितव्यं न एषा दास्यति गन्तव्यं। एषा स्त्री धारां वा पीषयति तिलम्वा मुद्गम्वा कलायाम्वा दलेति। यदि [15. A. P. 8. L. 4.] ताव शिला पूरकां पिपियाणं ओच्चरकं प्रविशति जानितव्यं एषा दास्यति। अथ दानि परिवर्तिय निध्यायति जानितव्यं एषा न दास्यतीति। एषा स्त्री कर्पासं कर्त्तेति। यदि ताव[त]न्तुकं निक्षिपियाणं उत्थेति जानितव्यं दाहिति एषात्ति[2]। एषा स्त्री उपविष्टिका आ-[15. A. P. 8. L 5.]सति। भिक्षून्[3] पश्यियाणं उत्थेति जानितव्यं दास्यति एषात्ति। अथ दानि उत्थियाणं भूयो उपविशति जानितव्यं न एषा दास्यति। एषा स्त्री भिक्षुं पश्यियाणं ओच्चरकं प्रविशति जानितव्यं दास्यति एषात्ति। अथ दानि रिक्ता निर्धावति जानितव्यं एषा न दास्यति गन्तव्यं। एषा स्त्री कांसभाजनं मार्गति भिक्षू पश्यि-[15. A. P. 8. L. 6.]याणं हस्ता धोवति जानितव्यं दास्यति एषात्ति। अथ दानि आभरणानि[4] वा उच्छारेति[5] जानितव्यं न एषा दास्यतीति। महान्तानां[6] मनुष्याणां गृहा भवन्ति तहिं कुण्डा उज्झितप्रकीर्णा भवन्ति शाटका वा पटका वा हारा वा अर्धहारा वा हिरण्यं वा सुवर्णं वा। न दानि तहिं अशब्दकर्णिकाये निर्गन्तव्यं। अथ खलु प्रति-

१. Ms. कर्णिका पूरकम्वकट्टय, cf. the next line.
२. Ms. एषान्ति।
३. Ms. भिक्षु न।
४. Ms. आमरणानि।
५. Ms. is not clear.
६. Ms. महात्मनां।

